पिंडान्सकृदनुमंत्र्यसव्यावृदावृत्योदङ्मुखोदक्षिणाग्निमीक्षमाणोयथाशक्त्यायतप्राणः प्रत्यावृत्यामीमदंतपितरोयथाभागमावृषा
यीषत । इतिपुनरनुमंत्र्ययज्ञोपवीतीचरोःप्राणभक्षंभक्षयेत् । हस्तंप्रक्षाल्याचम्यप्राचीनावीतीशुंधंतामित्याद्यैःपूर्ववत्पुनःकमंडलु
जलंपिंडेषुनिनीयदर्भेणपूर्वोपकल्पितमभ्यंजनंदद्यात् । संबोधनं । रूपाभ्यंक्ष्व । त्रिभिर्दर्भपिंजूलैरंजनमादायपिंडेषुतल्लेपंनि
मृजेत् । संबोधनं । रूपांक्ष्व । अथवस्त्रंतदलाभेनिष्क्रयंगंधाक्तानिसूत्राणिप्रतिपिंडंत्रीणिऊर्णापुंजंवायज्ञोपवीतंवापिंडसमीपेद
द्यात् । पंचाशद्वर्षतायाऊर्ध्वंस्वलोममप्रकोष्ठस्थंहृदयस्थंवा । एतद्वःपितरोवासोमानोतोन्यत्पितरोयुंग्ध्वं । पितरइमेवःकशिपूप
बर्हणे इतिकशिपूपबर्हणेनिवेद्य । पितरइदंवोर्घ्यंस्वधा इत्यर्घ्यंनिवेद्य । पितर० अयंवोगंधःस्वधा इत्यादिभिर्गंधपुष्पधूपदीपा
न्निवेद्य उपहारादिचयथासंभवंनिवेद्याथैनानुपतिष्ठेत । नमोवःपितरइषेनमोवःपितरऊर्जेनमोवःपितरःशुष्मायनमोवःपितरोघो
रायनमोवःपितरोजीवायनमोवःपितरोरसाय । स्वधावःपितरोनमोवःपितरोनमएतायुष्माकंपितरइमाअस्माकंजीवावोजीवंतइ
हसंतःस्याम ॥ मनोन्वाहुवामहे० ऋ० ३ दक्षिणांदिशंगच्छन्पिंडस्थान्पितॄन्स्वलोकगमनार्थंप्रस्थापयेत् । परेतनपितरः० ।
यज्ञोपवीती दक्षिणाग्निंप्रत्यागच्छेत् । अग्नेतमद्याश्वंनस्तोमैःक्रतुंनभद्रंहृदिस्पृशं । ऋध्यामातओहैः । ऋक् ॥ १ ॥ गार्हपत्यं
प्रत्यागच्छेत् । यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजि० नस्स । गृह्येत्वस्यसंन्नस्यगार्हपत्यपदरहितस्यजपमात्रम् । प्राचीना
वीती पिंडान्नमस्कृत्य । यज्ञोपवीतीमध्यमंपिंडंवीरंमेदत्तपितरः इत्यादायपत्न्यैप्रयच्छन्प्रेष्येत् पिंडंप्राशान इति । पत्नीपिंड
मादायप्राश्नीयात् । आधत्तपितरोगर्भंकुमारंपुष्करस्रजं । यथायमरपाअसत् ॥ पत्न्याएवमंत्रपाठः । पत्नीबहुत्वेविभज्यसर्वाभ्यः

प्रयच्छेदितिरुद्रदत्तः । कर्ताप्राचीनावीती । अप्स्वितरावतिप्रणीतांग्नौवाजुहुयाद्गवेवाब्राह्मणायवादद्यादथयज्ञोपवीतीयज्ञपात्रा णिप्रोक्ष्यद्विवदुत्सृज्येदुद्रिकेतृणंद्वितीयंकुर्यात् । चरुस्थालीशूर्पे । स्फ्योलूखले । मुसलस्रुवौ । ध्रुवाकृष्णाजिने । कमंडलुतृणे चोद्रासयामि । पक्षांतरेतु । चरुस्थालीस्फ्यौ । स्रुवध्रुवे । कमंडलुतृणेचेतिप्रयोगः । गृह्येतुजपांतेदक्षिणामुखउपविश्यविमान स्थान्पितॄन्पश्यन्मंद्रमध्योच्चस्वरैर्याचेत् । वीरंमे० ३ पिंडान्नमस्कृत्यपुत्रकामत्वेपत्न्यापूर्ववत्पिंडंप्राशयेत् । अन्यथेतरापिंडवत्प्र तिपत्तिरितिविशेषः । ततःसकृदाच्छिन्नान्यग्नावादध्यादितिशतपथश्रुतौ । अतिप्रणीतमग्निं अभून्नोदूतइतिमंत्रेणाग्नौप्रक्षिपेदि तितद्यसूत्रांतरेपुचदृश्यते । आभिर्गीर्भि० इदंविष्णु० भूर्भुवःस्वःइतिजपित्वाचम्यकर्मसमर्पणम् । अनेनपितृयज्ञेनप्रीयतांभग वानिह । मयाभक्त्याकृतंसर्वंतत्सद्ब्रह्मार्पणंभवेत् । इतिपिंडपितृयज्ञः ॥ ॥ छ ॥ ॥ छ ॥

अथश्रवणाकर्मसर्पबलिप्रयोगौ ॥ ॥ प्रथमप्रयोगेश्रवणाकर्मदिनात्पूर्वेद्युःप्रातःश्रवणाकर्मसर्पबल्यंगत्वेनमातृकापूजनपूर्व कंवृद्धिश्राद्धंकृत्वा श्रवणाकर्मदिनेपूर्वाह्णेस्वस्तिवाचनंकुर्यात् । तत्राग्न्यादयःप्रीयंतां श्रवणाकर्मणेस्वस्तिइतिविशेषः । तदंतेदि वैरवितुषाणांयवानांतदभावेव्रीहीणांलौकिकाग्नौभर्जनेनप्रस्थद्वयाधिकपरिमाणाधानाःकृत्वा तासांप्रस्थमात्राःपृथक्कृत्वावशि ष्टाभिःपिष्टरूपान्सक्तून्कृत्वातैर्नवंकलशंपूरयित्वा तंकलशंवैकंकतींदर्वींचबलिहरणींनवेशिक्येनिधायैतच्छिक्यंक्वापिनिवेशयेत् । पृथक्कृताःप्रस्थमात्राधानाःपात्रद्वयेसाम्येनविभज्यलौकिकेनसर्पिषाधाअनक्ति । स्वगृहादग्न्यगाराद्वाप्राच्यांशुचिंदेशंबल्यर्थंपरि गृह्णीयात् इहकरिष्यामिइति । एतावदहनिकार्यम् । श्रवणाकर्मसर्पबलिंचभुक्त्वापिकेचित्कुर्वंति । युक्तंतूपवासिनैवकार्याविति

भट्टाः ॥ ॥ सायंहोमंकृत्वादेशकालकीर्तनांते [1] ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंश्रवणाकर्मकरिष्येइतिसंकल्प्या
ग्निंसाहसनामायमितिविभाव्यधात्वान्वाधानं । आज्यभागदेवतेआज्येनेत्यंते अग्निंचतुश्चरुणाअच्युतंभौमंपुरोडाशेन अग्निमा
शयाज्येन वाजिनोधानाभिः अग्निंस्विष्टकृतमित्यादि । पात्रासादने चरुस्थाल्यासहकपालंशरावत्रयंप्रोक्षणपात्रंच । दर्वीस्रुवौ ।
चमसाज्यपात्रे । इध्मावर्हिषी । शूर्पकृष्णाजिने । उलूखलमुसले । दृषदुपले । मेक्षणपिष्टोद्वपन्यौ । शम्योपवेषौ । वेदमदं
तीपात्रेचेति । शूर्पद्वयस्यवासादनं । प्रोक्षणीसंस्कारादिपूर्णपात्रनिधानांतेशूर्पेचतुरोमुष्टीन्निरुप्य शूर्पांतरेचतथैवनिरुप्यपुरोडा
शपर्याप्तान्व्रीह्य निर्वापसंख्ययाप्रोक्ष्य क्रमेणपृथगवहत्त्यप्रक्षालयेत् । एकस्मिन्नेवनिर्वापेतुसहैवावहत्त्यप्रक्षाल्य चरुपुरोडाशार्था
न्विभज्य कृष्णाजिनेउदीचीनकुंभांशम्यांनिधाय तत्प्राग्भागेदृषदिपुरोडाशीयांश्चतुर्वारमध्युप्योपलांप्राचींकर्षयित्वापुनःप्रतीची
माकृष्य मध्यदेशेदक्षिणतउत्तरतश्चतिरश्चीमाकृष्य पुनःसंततंपिष्ट्वांततःप्राच्यांसमाप्यकृष्णाजिनेपिष्टानिप्रस्कंद्यावेक्ष्यशिष्टांस्तं
डुलान्पल्यापेपयेत् । अग्नेर्दक्षिणपार्श्वेसोदकांस्थालीमधिश्रित्योपवेषमादायतूष्णीमभिमंत्र्यतेनाग्नेःप्रत्यंचावंगारौपृथक्कृत्य तयो
रेकंनायव्यांदिशिनिरस्यापउपस्पृश्य द्वितीयमग्नेरुत्तरपार्श्वेवस्थाप्यतस्मिन्कपालमुपधायतत्रान्यमंगारंनिक्षिप्यवेदेनकपालेंगारा
न्निधायमदंतीपात्रेपिष्टसेकार्थमपस्तापयेत् । पिष्टोद्वपनींपुनःप्रक्षाल्यनिष्टपनेनशुष्कायामग्नेःपश्चान्निहितायांतस्यांतिरःपवित्रंकृ
ष्णाजिनात्पिष्टानिचतुर्वारंसमोप्य वाग्यतःपिष्टानित्रिरुत्पूयस्रुवेणप्रणीताभ्यआदायवेदेनोपयम्यपिष्टेष्वानीयपिष्टानिपक्त्वाअप

१ अग्निःसाहसनामा । प्रायश्चित्तेविटश्चैवपाकयज्ञेषुसाहसइविसंमहादितिरामकल्पद्रुमः ।

क्त्वात्र मदंतीपात्रस्थाभिस्ताभिःपिष्टान्यनुपरिप्लाव्य मेक्षणेनसंमिश्र्यपिंडंकृत्वावेदेनकपालादंगारानपोह्यस्थाल्यांतंडुलानोप्य
पुरोडाशंकपालेनिधायप्रथयन्नतुंगमनपूपाकृतिंकूर्माकारमश्वशफमात्रंकृत्वाद्भिस्त्वचंग्राहयेत् यथापुरोडाशात्कपालेऽपोनक्षरंति।
ततस्तेपवित्रेआज्यपात्रेनिधायेत्यादि । आज्येनसहधानाचरुपुरोडाशान्पर्यग्निकृत्वोल्मुकंनिरस्यापउपस्पृश्यपुरोडाशमुल्मुकैः
प्रताप्यदर्भैस्तृणादिभिर्वाभिज्वल्ययाचंविसृज्य वेदेनपुरोडाशेसांगारंभस्मप्रक्षिपेद्यथासुशृतोभवेत् । आज्योद्वासनादिचर्वासा
दनांते वेदेनपुरोडाशादंगारानपोह्याभिघार्याश्रयपात्रउपस्तीर्यापर्यावर्तयन्पुरोडाशमुद्वास्यवेदेनभस्मप्रमृज्याश्रयपात्रेनिधायक
पालंप्रत्यज्यपुरोडाशमनक्ति । विच्छेदंनिकर्षंचाकुर्वन्ननुपरिष्टात्सर्वमभ्यज्यस्रुवेणहस्तेनाधस्तादभ्यज्यलौकिकेनाज्येनपूरयित्वानि
मग्नंमकदपृष्ठंवाकृत्वाभ्याज्ययोर्मध्येननीत्वाबर्हिष्यासाद्य अक्ताधानाअग्नावधिश्रित्याभिघारणाद्यासादनांतंकुर्यात् । एवमन
क्ताअधिश्रयणवर्जमासाद्याभ्यर्चनाद्याज्यभागांतेउद्धृताचरोरवदानधर्मेणावदायजुहुयात् । अग्नेनयेत्यादिचतुर्णांमैत्रावरुणिरग
स्त्यस्त्रिष्टुबग्निः श्रवणाकर्मप्रधानहोमेवि०। ॐ अग्नेनयसुपथा० ऋक् १ अग्नयइदंनमम । एवमग्रेपि। ॐ अग्नेत्वंपारयान०
अग्नयइदं० २ ॐ अग्नेत्वमस्मद्युयोध्यमीवा० अग्नयइदं० ३ ॐ पाहिनोअग्ने० अग्नयइदं० ४ चतुर्भिर्ऋग्भिर्गंतेहोमः । सव्य
पाणिनादक्षिणपाणावुपस्तीर्यकृत्स्नंपुरोडाशंनिधायाश्रयाज्यात्सकृद्द्विर्वावदायाभिघार्यजुहुयात् । ॐ अच्युतायभौमायस्वाहा
अच्युतायभौमायेदं० । अपर्यावर्तयन्नृजुंप्रतिष्ठितंहुत्वास्रुवेणाश्रयाज्येनपुरोडाशस्योपरिजुहुयात् । मानोअग्नइत्यादेर्मैत्रावरुणि
रगस्त्यस्त्रिष्टुबग्निः श्रवणाकर्मप्रधानहोमेवि० । ॐ मानोअग्नेवसृजोअघाया० ऋक् १ अग्नयइदं० । सर्वाश्रयाज्यहोमस्तुश्रौ



नकविरुद्धः । स्वांजलावन्येनोपस्तरणंकारयित्वाअक्ताधानामुष्टिनाद्विस्त्रिर्वावोप्यपात्रस्थमवत्तंचाभिघार्योजलिवामपार्श्वेनजु
हुयात् । शंनोभवंतुवाजिनइत्यादेर्मैत्रावरुणिर्वसिष्ठस्त्रिष्टुब्वाजिनः । श्रवणाकर्मप्रधानहोमेवि० । ॐ शंनोभवंतुवाजिनो
हवेषु० ऋक् १ वाजिभ्यइदं । अनक्ताधानाःसर्वाःपुत्रादिभ्योदत्वाचरोर्धानाभ्यश्चसौविष्टकृतंहुत्वादक्षिणांतंसमाप्यकपालं
विमुच्यसंख्यायोद्वास्यआभिर्गीर्भिरित्यादि ॥ ॥ इतिश्रवणाकर्म ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

ततःसर्पबलिः ॥ ॥ देशकालकीर्तनांते ममोपात्तदुरितक्षयद्वारामससपरिवारस्यसंभावितसर्पबाधानिवृत्तिद्वाराश्रीपरमे
श्वरप्रीत्यर्थंसर्पबलिंकरिष्ये । शिक्यस्थकलशात्सक्तूनांदर्वींपूरयित्वादायगृहादग्न्यगाराद्वाप्रागुपनिष्क्रम्य पूर्वगृहीतेशुचौदेशे
अपोपनीय । सर्पबलिमंत्राणांगौतमोवामदेवोयजुःसर्पाहोमादौविनियोगः । ॐ सर्पदेवजनेभ्यःस्वाहा । इतिप्राङ्मुखोहुत्वानम
स्करोति । ॐ येसर्पाःपार्थिवायआंतरिक्षायेदिव्यायेदिश्यास्तेभ्यइमंबलिमाहार्षंतेभ्यइमंबलिमुपाकरोमि । बलिंप्रदक्षिणंपरीत्य
पश्चाद्बलेरुपविश्य । ॐ सर्पोसिसर्पतांसर्पाणामधिपतिरस्यन्नेनमनुष्यांस्त्रायसेपूपेनसर्पान्यज्ञेनदेवांस्त्वयिमासंतंत्वयिसंतःसर्पामा
हिंसिषुर्ध्रुवांतेपरिददामि । इतिजपित्वा ज्येष्ठानुक्रमेणपुत्रादीनांपरिदानंकुर्यात् । ध्रुवमहादेवशर्माणंतेपरिददामि । पुत्राणामंते
ध्रुवसावित्रीदेवींतेपरिददामि इत्यप्रत्तांदुहितरं । तासामंते ध्रुवपार्वतीदेवींतेपरिददामि इतिभार्यां । ध्रुवमांतेपरिददामि इत्या
त्मानं । ततः अन्यःकर्ताचेन्मांपदस्थानेयजमाननामद्वितीयांतंवदेत् । एतत्पर्यंतंबलेःकर्तुश्चमध्येकेनापिव्यवधानंनकार्यं ।
परेद्युःप्रातःकालमारभ्यैवमेव । सर्पदेवजनेभ्यःस्वाहेतिसायंप्रातर्बलिंहरेदाप्रत्यवरोहणात् । नात्रनमस्कारादि । प्रत्यहंबलिदा



नाशपौश्रावणीप्रतिपदमारभ्ययस्मिन्नहनिप्रत्यवरोहणंक्रियतेतस्मादर्वाचीनानिदिनानिह्रासवृद्धिभ्यांप्रसंख्यायतेषुयावंतःप्रातः
सायंकालास्तावतोवलीन्दद्यात्तदेवदत्ता आभिर्गीर्भिरित्यादि ॥ इतिसर्पबलिः ॥ ॥ छ ॥ ॥ छ ॥

अथाश्वयुजीकर्मप्रयोगः ॥ ॥ प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धंकृत्वामृदंतरेणगृहमुपलिप्यतृणैराच्छाद्यवितानवंधनादि
नागृहमलंकृत्यभुवंसमीकुर्यात् । परेद्युःसर्वेगृह्याःकृताभ्यंगस्नानाधौतशुक्लांवरधराभवेयुः । कर्ताप्रातर्होमांतेस्वस्तिवाचनंकु
। पशुपतिःप्रीयतामितिविशेषः । ततोदेशकालकीर्तनांते ममपत्नीपुत्रादिसहितस्योपात्तदुरितक्षयपूर्वकन्यूनापेक्षित
र्गतापूर्णानुपसादनसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंआश्वयुजीकर्मकरिष्ये । अग्निंसाहसनामायमितिविभाव्यध्यानादि ।
आज्येनेत्यंते पशुपतिंशिवंशंकरंपृषातकंप्रधानदेवतांचरुणा पृषातकंप्रधानदेवतांपृषातकेनअग्निंस्विष्टकृतमि
यासहपृषातकस्याल्यासादनं । समंत्रकेनिर्वापप्रोक्षणे पशुपतयेत्वाजुष्टंनिर्वपामीत्यादि । चरुश्रपणांतेआस्रा
रेष्वतन्नाज्यंनिषिंचेत् । चरुपृषातकाभ्यांसहाज्यस्यपर्यग्निकरणम् । चरोरुत्तरतःपृषातकमासाद्याज्यभागांते
गत् । पशुपतयइत्यादिमंत्रयोगौतमोवामदेवोयजुःपशुपतिःपृषातकश्च आश्वयुजीकर्मप्रधानहोमेवि० । ॐ
ंकरायपृषातकायस्वाहा पशुपतयेशिवायशंकरायपृषातकायेदं० । एतद्धोमकालेपुत्रादयःकर्तारमन्वारभेरन्त
। ततोयजमानाञ्जलावन्यःकश्चिदुपस्तीर्यस्रुवेणपृषातकंद्विस्त्रिर्वावदायाभिघारयेत् । यजमानोजुहुयात् ।

# विक्रय्यानि संस्कृतपुस्तकानि.

| | मू. | प्रे. व्य. |
|---|---|---|
| उत्सर्जनोपाकरणविधिः—(ऋग्वेदीश्रावणी.) | ·।· | ॰– |
| ऋग्वेदी नित्यविधिः. | ·।– | ॰–॥ |
| देवीसहस्रनामावलिः. | ॰≡ | ॰॥। |
| नित्यकर्मपद्धतिः. | ॰= | ॰॥। |
| पञ्चायतनदेवानां पृथक् अष्टोत्तरशतनामावलिः. | ॰≡ | ॰॥। |
| पूजासमुच्चयः(विपयाः१०५) ब्रह्मकर्मसमुच्चयपरिशिष्टरूपः । अस्मिन्वर्षप्रतिपदमारभ्य हुताशन्यन्तर्वर्तिविविधव्रताङ्गभूताः पुंभिः स्त्रीभिश्चावश्यं करणीयाः सप्रमाणाः पूजाः, तथा संक्रान्त्यादिनियतनिमित्तधर्मसंकल्पाः, स्नानसंकल्पाः, विविधदेवानां सहस्राष्टोत्तरशतनामावलयश्च संगृहीताः सन्ति. | १ | ·।· |
| प्रतिसांवत्सरिकश्राद्धप्रयोगः राक्षोघ्नसूक्तश्राद्धसूक्तसहितः. | ·।= | ॰– |
| ब्रह्मकर्मसमुच्चयः हिरण्यकेशीयः (विपयाः३८८) तैत्तिरीयशाखिब्राह्मणोपयुक्तः. | ३। | ·॥= |
| विष्णुसहस्रनामावलिः. | ·।· | ॰॥। |
| शिवसहस्रनामावलिः. | ·।· | ॰॥। |
| सप्तशती (चण्डीपाठः), देवीसूक्तं त्रीणि रहस्यानि च इत्येतैः सहिता; कौशेयबद्धा, स्थूलाक्षरा. | १ | ·।· |
| सप्तशती कौशेयपट्टवेष्टिता, मध्यमाक्षरा. | ·॥।· | ॰= |
| सप्तशती कौशेयेन बद्धा सूक्ष्माक्षरा. अस्यां प्रयोगमन्त्रयन्त्रादिविषयाः ( ४८ ) सन्ति. | ·॥· | ॰= |

ॐ ऊनंमेपूर्यतांपूर्णंमेमोपसदत्पृषातकायस्वाहा पृषातकायेदं० । स्विष्टकृदर्थमुपस्तीर्यचरोर्हस्तेनपृषातकस्यस्रुवेणोत्तरार्धादवदायद्भिरभिघार्यसौविष्टकृतादिहोमशेषंसमाप्य आभिर्गीर्भिरित्यादि ॥ इत्याश्वयुजीकर्म ॥ ॥ ६ ॥

अथाग्रयणप्रयोगः ॥ ॥ प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धंस्वस्तिवाचनंचकुर्यात् । तत्रेंद्राग्न्यादयःप्रीयंतामितिविशेषः । शदेशकालकीर्तनांते ममोपात्तदुरितक्षयपूर्वकजरारोगनिवृत्तिश्रीयशोन्नप्राप्तिनवधान्यप्राशनाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंआग्रयणंकरिष्ये इतिसंकल्प्याग्निसाहसनामायमितिविभाव्यध्यानादि । आज्यभागदेवतेआज्येनेत्यंतेइंद्राग्नी १ विश्वान्देवान् २ द्यावापृथिव्यौ ३ एताःप्रधानदेवताश्चरुणा अग्निंस्विष्टकृतमित्यादि । तूष्णींद्वादशमुष्टीन्निरुप्यतथैवप्रोक्षणादि । आज्यभागांतेविभागाभिमर्शावकृत्यैवावदानधर्मेणहोमः । आग्रयणहोममंत्राणांगौतमोवामदेवोयजुरिंद्राग्नीविश्वेदेवाद्यावापृथिवीच । आग्रयणप्रधानहोमेवि० । ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूरिंद्राग्निभ्यांस्वाहा इंद्राग्निभ्यामिदं० १ । ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूर्विश्वेभ्योदेवेभ्यःस्वाहा । विश्वेभ्योदेवेभ्यइदं० २ । ॐ सजूर्ऋतुभिःसजूर्विधाभिःसजूर्द्यावापृथिवीभ्यांस्वाहा । द्यावापृथिवीभ्यामिदं० ३ । उत्तरार्धात्सकृदवदायस्विष्टकृद्धोमादि । चरुशेषवर्जंहविरुच्छिष्टंदक्षिणा । कर्मसमाप्तौवैश्वदेवंनवान्नेनकृत्वा आग्रयणशेषंवैश्वदेवशेषंचैकीकृत्य तत्पात्रंसव्यहस्तेनिधायदक्षिणहस्तेनतदन्नमभिमृशेत् । प्रजापतयेत्वेत्यादेर्गौतमोवामदेवोयजुरन्नं । अभिमर्शेवि० । ॐ प्रजापतयेत्वाग्रहंगृह्णामिमह्यंश्रियैमह्यंयशसेमह्यमन्नाद्याय । भद्रान्नइत्यादिद्वयोर्गौतमोवामदेवस्त्रिष्टुप्पितुः । प्राशनेआलभनेचवि० । ॐ भद्रान्नःश्रेयःसमनैष्टदेवास्त्वयावसेनसमशीम

हित्वा । सनोमयोभूःपितवाविवेशशंनोभवद्विपदेशंचतुष्पदे । इतिप्राश्याचम्याचमनस्थानएवंनाभिमालभेत् । ॐ अमोसि प्राणतदृतंब्रवीम्यमोसिसर्वानसिप्रविष्टः । समेजरांरोगसपनुद्यशरीरादमामएधिमामृथामइंद्र । अपउपस्पृश्यआभिर्गीर्भिरि त्यादि । इत्याग्रयणप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अथाश्वयुजीकर्माग्रयणयोरेकदिनेप्राप्तौसहप्रयोगः ॥ ॥ प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धांतेउपलेपनवितानबंधना दिस्वस्तिवाचनांतंकृत्वादेशकालकीर्तनांते ममपत्नीपुत्रादिसहितस्योपात्तदुरितक्षयपूर्वकन्यूनापेक्षितसंपूर्णतापूर्णानुपसादनसिद्धि द्वाराश्रीपरमेश्वरप्रीत्यर्थंआश्वयुजीकर्म, ममोपात्तदुरितक्षयपूर्वकजरारोगनिवृत्तिश्रीयशोन्नप्राप्तिनवधान्यप्राशनाधिकारसिद्धि द्वाराश्रीपर०र्थंआग्रयणंचकरिष्ये । अग्निंसाहसनामायमितिविभाव्यध्यानं । आश्वयुजीकर्माग्रयणहोमेदेवतापरि० भागदेवते आज्येन । पशुपतिंशिवंशंकरंपृषातकंप्रधानदेवताश्चरुणा १ पृषातकंप्रधानदेवतांपृषातकेन २ इंद्राग्नी ३ विश्वान्देवान् ४ द्यावापृथिवी ५ एताःप्रधानदेवताश्चरुणा अग्निंस्विष्टकृतमित्यादि । पात्रासादनेचरुस्थालीद्वयंपृषातकस्थालींप्रोक्षणपात्रंच । दर्वीस्रुवावित्यादि । शूर्पद्वयंकृष्णाजिनंच । उलूखलमुसलेइति । निर्वापे पशुपतयेत्वाजुष्टंनिर्वपामिइतिजीर्णान्निरुप्य पृषात कस्थाल्यांपयोनिषिच्य तत्राज्यमानीय शूर्पांतरेणवानाद्वादशमुष्टींस्तूष्णींनिरुप्यनिर्वापवज्जीर्णान्नवांश्चप्रोक्ष्य पर्यायेणावघाता दिकृत्वा चरुद्वयंश्रपयेत् । आज्यंनिरुप्यहविस्त्रयेणसहपर्यग्निकरणादि । जीर्णचरोरासादनांते तत्प्राक्पृषातकमासाद्यनवचरो रभिघारणादि । आज्यभागांतेसुतादिभिरन्वारब्धःस्वसन्निधौतानुपवेश्यवाजीर्णचरुमवदायजुहुयात् । ॐ पशुपतयेशिवायशं

करायपृषातकायस्वाहा । पशुपतयेशिवायशंकरायपृषातकायेदं० । ततोयजमानांजलावन्यउपस्तीर्य स्रुवेणपृषातकंद्विस्त्रिर्वा वदायाभिघारयेत् । यजमानोजुहुयात् । ॐ ऊनंमेपूर्यतांपूर्णंमेमोपसदत्पृषातकायस्वाहा । पृषातकायेदं० । ततोनवचरोरवदा नावदाय सजूरित्यादिमंत्रत्रयेणनिर्हुत्वाजीर्णादिहविस्त्रयोत्तरार्धैःस्विष्टकृद्धोमादि । नवहविःशेषवर्जंदक्षिणांदद्यात् । शेषमा ग्रयणवत् । इत्याश्वयुजीकर्माग्रयणयोःसहप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

यदितुपूर्वाह्णसंधौशेपपर्वणिएतेक्रियेतेपूर्णमासारंभश्चपूर्वेद्युर्नकृतस्तदापूर्णमासस्थालीपाकस्यापितत्रप्राप्तेस्त्रयाणांसहप्रयोगः ॥ ॥ तत्रचयदिपूर्णमासात्प्रागेवाग्रयणमितिपक्षस्तदाग्रयणपूर्णमासाश्वयुजीकर्मणांक्रमेणसहानुष्ठानं । तत्रषण्णामपि देवतानांनवैरेवयागः । आग्रयणोत्तरत्वात् । पक्षांतरेतुपूर्णमासाश्वयुजीकर्माग्रयणानांसहानुष्ठानं । तत्रचाग्रयणेतरदेवतानां जीर्णैरेवयागइतिविशेषः । तत्राद्यपक्षेप्रयोगः ॥ प्राग्वदाग्रयणसंकल्पवाक्यमुक्त्वा, ममोपात्तदुरितक्षयद्वाराश्रीप०र्थंपूर्णमास स्थालीपाकहोमं, ममपत्नीपुत्रादिसहितस्योपात्तदुरितक्षयपूर्वकन्यूनापेक्षितविषयसंपूर्णतापूर्णानुपसादनसिद्धिद्वाराश्रीपरमे०र्थंआश्वयुजीकर्मचकरिष्यइतिसंकल्पः । अन्वाधानेआग्रयणाश्वयुजीकर्मपूर्णमासस्थालीपाकहोमेदेवतापरिग्रहार्थमित्यादि । इंद्राग्नी १ विश्वान्देवान् २ द्यावापृथिव्यौ ३ पशुपतिंशिवंशंकरंपृषातकं ४ चैताःप्रधानदेवताश्चरुणा । पृषातकं ५ प्रधानदेवतांपृषातकेन । अग्निमग्नीषोमौचप्रधानदेवतेचरुणा अग्निंस्विष्टकृतमित्यादि । सर्वेभ्योनवानेवप्राग्वन्निरुप्यप्रोक्ष्यसहैवाव हत्यश्रपणादि । आज्यभागांतेचरुंसाम्येनदक्षिणतउत्तरतश्चद्विधाविभज्यउत्तरस्थंपुनस्त्रेधाविभज्य । इदंपशुपतये । इदमग्नये ।

इदमग्नीषोमाभ्यामितिमंत्रेणाभिमृश्यपूर्ववत्क्रमेणजुहुयात् । चरुदक्षिणार्थंचजेंहविरुच्छिष्टंदक्षिणा । वैश्वदेवादिशेषमाग्रयणवत् । पक्षांतरेतुसंकल्पवाक्यानांव्यत्यासः । आद्याभ्यस्तिसृभ्योजीर्णान्निरुप्येतराभ्योनवान्निरुप्यपृथक्श्रपणादिप्राग्वत्सर्वंयथार्थंकुर्यात् । जीर्णचरुंत्रेधाविभज्याभिमर्शःप्राग्वत् । नवचरुशेषवर्जंदक्षिणाइत्याद्यूह्यं । यदितुदर्शपूर्वाह्णसंधौशेषपर्वण्याग्रयणंक्रियतेदर्शारंभश्चपूर्वेद्युर्नकृतस्तदाद्वयोःसहप्रयोगः । तत्रापिजीर्णनवादिसर्वंयथायथंप्राग्वदूह्यम् । इत्याग्रयणपूर्णमासाम्वयुजीकर्मणांसहप्रयोगः ॥

॥ छ ॥ ॥ छ ॥ ॥ छ ॥

अथश्यामाकाग्रयणविचारः ॥ ॥ गं० राः ॥—निर्णयसिंधौश्यामाकाग्रयणमनित्यमित्युक्तं । वस्तुतस्तुसिद्धांतिभाष्येश्रौतेपिश्यामाकाग्रयणस्यकृताकृतत्वसाधनात् । गृह्येसौम्यमंत्रानाम्नानात् । शौनकेनाप्यनुक्तेः । अनाहिताग्निर्नवप्राशिष्यन्नाग्रयणदेवताभ्यःस्विष्टकृच्चतुर्थीभ्योगृह्येग्नौजुहुयादितिसांख्यायनसूत्रे । कथमुखल्वनाहिताग्नेराग्रयणंभवतीतिस्थालीपाकंश्रपयित्वाग्रयणदेवताभ्यःस्विष्टकृच्चतुर्थीभ्योजुहुयादितिबौधायनकर्मांतसूत्रे । आग्रयणदेवताभ्यइंद्राग्निभ्यांविश्वेभ्योदेवेभ्योद्यावापृथिवीभ्यांस्विष्टकृच्चतुर्थीभ्योजुहुयादितिबौधायनस्मार्तसूत्रे । आग्रयणदेवताभ्यःस्विष्टकृच्चतुर्थीभ्योहुत्वेत्यापस्तंबगृह्येचसौम्यस्यादर्शनात् जयंतेनाप्यनुक्तेश्च स्मार्ताग्नौश्यामाकाग्रयणंनकार्यमितियुक्तंभाति । दर्शेष्टेःपरमुक्तमाग्रयणकंप्राक्पौर्णमासाच्चतदितिदीपिकादिलेखस्त्वेतत्सूत्रागोचरःश्रौतपरःइष्टिपदात् । आश्वलायनान्यपरोचेति ॥

॥ छ ॥

अथप्रत्यवरोहणप्रयोगः ॥ ॥ उक्तकालेप्रत्यवरोहणंकरिष्यन्प्रथमप्रयोगेश्रवणाकर्मवद्वृद्धिश्राद्धंस्वस्तिवाचनंचकुर्यात् । तत्रश्वेतःप्रीयतामितिविशेषः । ततोगृहसमीपेप्ररूढान्अपामार्गःशाकस्तिल्वकःपरिव्याधइत्येतान्समूलान्परिखायोद्वास्यमृदंतरेणगृहमुपलिप्यतृणैराच्छाद्यभुवंसमीकुर्यात् । शयनार्थफलरहितधान्यतृणनिर्मितंकटंसंपाद्य अभुञ्जानःसायंहोमोत्तरंदेशकालकीर्तनांते ममस्त्रीपुत्रादिसहितस्यजलस्थलचरसर्पबाधानिवृत्त्यभयहेमंतसौमनस्यसिद्धिद्वाराश्रीप० प्रत्यवरोहणंकरिष्ये । अग्निंसाहसनामायमितिविभाव्यध्यानादि । आज्यभागदेवतेआज्येनेत्यंते श्वेतंप्रधानदेवतांद्विःपायसेन रुद्रमिध्मरज्ज्वेत्यादि । तूष्णींचतुरोमुष्टीन्निरुप्यचतुर्वारंप्रोक्ष्यपयसिचरुश्रपणादि । आज्यभागांतेसुतादिभिरन्वारब्धःपायसादवदायावदायद्वेआहुतीजुहुयात् । अपश्वेतेत्यादिद्वयोर्गौतमोवामदेवऋषिः आद्यस्यानुष्टुप् अंत्यस्यगायत्री श्वेतोदेवता । प्रत्यवरोहणप्रधानहोमेवि० । ॐ अपश्वेतपदाजहिपूर्वेणचापरेणच । सप्तचवारुणीरिमाःसर्वाश्चराजबांधवीःस्वाहा । श्वेतायेदं० १ । ॐ नवैश्वेतश्चाभ्यागारेहिर्जघानकिंचन । श्वेतायवैदार्वायनमःस्वाहा । श्वेतायेदं० २ नात्रसौविष्टकृत् । अभयंनइत्यादिद्वयोर्गौतमोवामदेवोयजुरग्निहेमंतौ । जपेवि० । ॐ अभयंनःप्राजापत्येभ्योभूयात् इत्यग्निमीक्षमाणोजपति । ॐ शिवोनःसुमनाभव इत्युपांशूक्त्वा हेमंतइतिमनसाध्यायेत् । पूर्वसंपादितंकटंअग्नेःपश्चात्स्वयमास्तीर्यतस्मिन्पत्नीपुत्रादिसहितउपविश्यजपेत् । स्योनेत्यादेर्मेधातिथिर्गायत्रीभूमिः । जपेवि० । ॐ स्योनापृथिविभव०थः । एतदादिस्वस्त्ययनपर्यंतान्वैकृतमंत्रान्पुत्रादयोप्युपनीताश्चेज्जपेयुः । ततस्तत्रप्राक्शिराउदङ्मुखोदक्षिणपार्श्वेनशयीत । गृहिणोनंतरंपत्न्यादयोज्येष्ठानुक्रमेणयथावकाशंवातथैवशयीरन् । सर्वेउत्थाय

प्राङ्मुखाआसित्वा । अतोदेवाइत्यादेर्मेधातिथिर्गायत्रीविष्णुर्देवावा । जपेवि० । ॐ अतोदेवाअवं० भिः । इतिमंत्रंत्रिर्जपेयुः । पुनरपिसर्वेतथैवशयित्वोत्थायदक्षिणमुखाआसित्वा ॐ अतोदेवाअवंतुनःइतिपादंसकृज्जपेयुः । पुनरपिसर्वेतथैवशयित्वो त्थायपश्चिमामुखाआसित्वा ॐ यतोविष्णुर्विचक्रमे इतिपादंजपेयुः । पुनरपिसर्वेतथैवशयित्वोत्थायोत्तरामुखाआसित्वा ॐ पृथिव्याःसप्तधामभिः इतिपादंजपेयुः । यजमानोरज्जुहरणादिहोमशेषंसमापयेत् । ततःसर्वेस्वस्वशय्यायांशयीरन् । यजमानःप्रातर्होमांतेकृतसंध्यैःसर्वैःसहजपेत् । सूर्योनइत्यादिपंचानांचक्षुर्गायत्रीसूर्यः । उदुत्यमित्यादिनवानांप्रस्कण्वोगायत्री सूर्यः । चित्रंदेवनामित्यादिषण्णांकुत्सस्त्रिष्टुप्सूर्यः । नमोमित्रस्येत्यादिद्वादशानामभितपाजगती । शंनोभवेत्यादेस्त्रिष्टुप्सूर्यः । मामगामेत्यादिषण्णांबंधुसुबंधुश्रुतबंधुविप्रबंधवोगायत्रीविश्वेदेवाः । महित्रीणामित्यादितिसृणांसत्यधृतिर्गायत्र्यादित्याः । कनिक्रददित्यादिषण्णांगृत्समदस्त्रिष्टुप् । प्रदक्षिणिदावदन्नित्यनयोर्जगती । उद्गातेवेत्यस्यातिशक्वर्यष्टिर्वाशकुंतोदेवता । जातवे दसइत्यस्यकश्यपस्त्रिष्टुबग्निर्जातवेदाः । तच्छंयोरित्यस्यशंयुःशक्करीविश्वेदेवाः । जपेवि० । जपांतेयजमानोभक्ष्यभोज्याद्यन्नं बहुगुणंसंपाद्यतेनचतुरोब्राह्मणान्संभोज्यभुक्तवद्भिस्तैःपुण्याहवाचनंकुर्यात् । यद्वा तान्प्रति स्वस्त्ययनंभवंतोब्रुवंतुइतिवदेत् । तेचस्वस्त्ययनमस्त्वितिवदेयुः । ततआभिर्गीर्भिरित्यादि ॥ इतिप्रत्यवरोहणप्रयोगः ॥ छ ॥ ॥ छ ॥

अथकेवलपार्वणश्राद्धप्रयोगः ॥ ॥ तत्रमध्याह्नसंध्योपासनांते वैश्वदेवंकृत्वा देशकालकीर्तनांते देवपितृतृप्त्यर्थंपार्वण श्राद्धांगतर्पणंकरिष्येइतिसंकल्प्य दैवधर्मेण पुरूरवसंज्ञकान्विश्वान्देवांस्तर्पयामि इतिमंत्रावृत्त्याद्भिःसकृद्धातर्पयित्वाआर्द्रवं

ज्ञकान्विश्वान्देवास्तर्पयामि इतितथैवसंतर्प्य पित्र्यधर्मेणश्राद्धेयक्ष्यमाणान्पित्रादीन्मंत्रावृत्त्यात्रिःसकृद्वातर्पयित्वाआचम्यतर्पणं समाप्य । ततोद्विराचम्यपवित्रपाणिःप्राणानायम्य देशकालौसंकीर्त्यप्राचीनावीती । पुरूरवसंज्ञकानांविश्वेषांदेवानांआर्द्रवसं ज्ञकानांविश्वेषांदेवानां अस्मत्पितुरित्यातित्रयाणामुद्दिश्य तृप्त्यर्थंपार्वणश्राद्धंकरिष्ये । इच्छाचेत्स्मृत्यनुसारेणपित्रादेःसपत्नी कस्येतिविशेषणंदेयं । मातामहानामपिसपत्नीकानामिच्छातउच्चारणंस्मृत्यनुसारात् । उपवीतीदेवार्थविप्रनिमंत्रणादि पाणिहो मोभुक्तशेषमात्रेणोच्छिष्टसमीपेपिंडदानंच । मातामहादिसत्वेअपहताइतिमंत्रावृत्त्याद्वेलेखेउल्लिखेदित्यादिविशेषः । अत्रापेक्षितो मंत्रेपूहविचारस्तुमहालयप्रकरणेवक्ष्यते ॥ इतिकेवलपार्वणश्राद्धप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

अथपिंडपितृयज्ञपार्वणश्राद्धयोर्व्यतिषंगप्रयोगः ॥ ॥ तत्रतिलोदकसंपादनांतंपार्वणवत्कृत्वा आचम्यतीर्थप्रवेशादिदेश कालकीर्तनांते उपक्रांतंपार्वणश्राद्धं, ममोपात्तदुरितक्षयद्वाराश्रीपरमेश्वरप्रीत्यर्थंपिंडपितृयज्ञंचव्यतिषज्यकरिष्येइतिसंकल्प्या ग्निंध्यात्वा येरूपाणीत्यादि । मातामहादिकरणपक्षेसकृदाच्छिन्नद्वयं । पात्रप्रोक्षणादिश्रपणांते मातामहादिसत्वेमंत्रावृत्त्याद्वि तीयालेखामुल्लिख्यद्वयोरभ्युक्षणादि । अभ्यंजनांजनासादनांतेमातामहादिसत्वेद्वितीयंकशिपूपबर्हणंवासस्तदर्थंद्रव्यंवासादयेत् । एतदंतंपितृयज्ञस्यकृत्वास्वागतप्रश्नादिपित्र्यविप्रपाणिशोधनांतंश्राद्धंकुर्यात् । यत्तुइध्माधानांतेस्वागतप्रश्नादीतितत्परिशिष्टवि रुद्धम् । अथकास्येस्थालीपाकादन्नमुद्धृत्येत्यादिमेक्षणानुप्रहरणांतंपिंडपितृयज्ञंकृत्वा मंडलादिकरिष्येइत्यादिपिंडनिपरणंकरि

प्यइतिप्रश्नांतेपिंडपितृयज्ञवत्पिंडदानादिपात्रोत्सर्गांतंकृत्वा अनाचांतेषुपिंडदानपक्षेइदानींब्राह्मणानाचमय्य विकिरणादिश्राद्ध
शेषंसमापयेत् । इतिपिंडपितृयज्ञपार्वणश्राद्धयोर्व्यतिषंगप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

अथाष्टकाप्रयोगः ॥ ॥ तत्राश्वलायनमतेमार्गशीर्षादीनांचतसृषुकृष्णपक्षगतास्वष्टमीषुचतस्रोष्टकाः । भाद्रपदापरपक्षेष्टम्यां
त्वष्टकाधर्मकंमाघ्यावर्षसंज्ञकंपंचममितिमुख्यःपक्षः । चतुर्ष्वष्टकानामसंभवेमाघे तत्रासंभवेपौषफाल्गुनयोरन्यतरस्मिन्वाएकाष्ट
कास्वकालेमाघ्यावर्षंचेतिद्वयमेव । इतरैस्तुउक्तेष्वेवपंचसुमासेषुपंचाष्टकाःकार्याः । अशक्तौमार्गशीर्षादित्रयेतिस्रःभाद्रपदेचतुर्थी
तिचतुष्टयं । अत्यशक्तौमाघेभाद्रेचेतिद्वयं । एषुसर्वेषुपक्षेषुप्रत्यष्टमिपूर्वेद्युःश्राद्धमन्वष्टक्यंश्राद्धंचभवत्येव । ततोप्यशक्तौमाघ
भाद्रयोरष्टमीश्राद्धमात्रंसर्वेषां । तत्राप्यशक्तौआमैर्मूलफलैर्हिरण्येनवाप्रदानमात्रं । अत्राप्यशक्तौएषामेष्टकाइतिध्यायन् अनडुद्भ्य
स्तृणदानं अग्निनाशुष्कतृणदाहं तिलतर्पणं अनूचानेभ्यउदकुंभदानंश्राद्धमंत्राध्ययनंवाकुर्यात् ॥ - ॥ तत्रपूर्वेद्युःश्राद्धप्रयोगः ॥
श्राद्धयोग्याष्टमीदिनात्पूर्वेद्युःपार्वणवत्तर्पणांतंवैश्वदेवांतंवाकृत्वादेशकालकीर्तनांते पार्वणवद्देवान्पितॄंश्चोक्त्वा तृप्त्यर्थमित्यंतेश्वो
ष्टकाश्राद्धंकर्तुकामःपूर्वेद्युःश्राद्धंकरिष्ये । विप्रान्निमंत्र्यमध्याह्नेतान्संनिधाप्य व्यतिषंगवदग्निध्यानादिकुर्यात् । तत्रहविस्त्रयपक्षे
पात्रासादनेतिस्रःस्थालीरासाद्यतासुव्रीहिपूरणादिक्षालनांते प्रथमायांशुद्धौदनं द्वितीयायांतिलसिश्रौदनं तृतीयायांपायसंच
क्रमेणाग्नेयीसंस्थंश्रपयेत् । रेखोल्लेखनादिकृत्वाओदनादीनभिघार्योदगुद्वास्यातिप्रणीतात्पश्चादाग्नेयीसंस्थानासाद्यकशिपूपबर्ह
णासादनांतं । अपूपमात्रपक्षेतत्स्थापनार्थैकैवस्थाली । शूर्पोलूखलमुसलकृष्णाजिनानांनिवृत्तिः । अपूपास्तुव्रीहितंडुलसंभवा

घृतयुक्तावह्वच्छिद्राश्चतुःपुरुपाहारपर्याप्तालौकिकाग्निपक्वाग्राह्याः । अत्रपक्षेपात्रप्रोक्षणांतेलेखोल्लेखनादिकृत्वा हविरासादनकाले अपूपानासादितस्थाल्यामादायाग्नावधिश्रित्याभिघारणादिकशिपूपबर्हणासादनांतं । ततोभूमिशोधनादिशुध्यर्थमंत्रजपादिवा पित्र्यविप्रपाणिशोधनांतंकृत्वात्रिषुपात्रेपुओदनादिभ्यस्त्रिभ्यःपृथगुद्धृत्य केवलापूपपक्षेएकस्मिन्नेवपात्रेउद्धृत्यघृतेनाजनादीध्माधानांतेपिंडपितृयज्ञवत्रिभ्योहविर्भ्योद्विर्द्विरवदाय पक्षांतरेअपूपेभ्यएवद्विरवदाय पात्रस्थान्यवत्तंचाभिघार्यजुहुयात् । एवं पुनःपुनरवदायाष्टाभिश्चतुर्दशभिर्वाहोमः ॥ तत्रमंत्राः ॥ उदीरता० हवेपुस्वधानमः पितृभ्यइदं० १ । एवमग्रेपि । इदंपितृभ्यो० २ आहंपितृन्० ३ बर्हिषदःपितरः० ४ उपहूताःपितरः० ५ आच्याजानु० ६ आसीनासो० ७ येनःपूर्वे० ८ येतातृपुर्दे० ९ येसत्यासो० १० अग्निष्वात्ताः० ११ त्वमग्नईळितो० १२ येचेहपितरो० १३ येअग्निदग्धा० १४ होमांतेमेक्षणमनुप्रहृत्यमंडलकरणादि । स्थालीपाकत्रयेणसह पक्षांतरेअपूपैःसहभुक्तशेषमुद्धृत्यशेषनिवेदनादिसर्वव्यतिषंगवत्कुर्यात् । पूर्वंतर्पणंनकृतंचेदिदानींकार्यम् ॥ इतिपूर्वेद्युःश्राद्धप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

अथाष्टमीश्राद्धप्रयोगः ॥ ॥ तत्रपूर्ववन्मध्याह्नसंध्योपासनांतेवैश्वदेवंकृत्वा देशकालकीर्तनांते कामसंज्ञकानांविश्वेषांदेवानां कालसंज्ञकानांविश्वेषांदेवानां अस्मत्पितुरित्यादित्रयःषड्वा तृप्त्यर्थमित्यंतेअष्टकाश्राद्धंकरिष्ये । विप्रान्निमंत्र्यसंनिधाप्य अष्टकाश्राद्धांगहोमंकरिष्ये । तत्रदेवतापरिग्रहार्थमित्याद्याज्यभागदेवतेआज्येनेत्यंते अग्नींद्रौ विश्वान्देवांश्चतुः प्रजापतिंसकृत् एताःप्रधानदेवताश्चरुणा अग्निंस्विष्टकृतमित्यादि । अष्टाविंशतिमुष्टीस्तूष्णींनिरुप्यतथैवप्रोक्ष्य श्रपणाद्याज्यभागांतेचरो

विभागमकृत्वाअवदानधर्मेणसप्ताहुतीर्जुहुयात् । अग्नेनयेत्यादिद्वयोरगस्त्यस्त्रिष्टुबग्निः होमेवि० । ॐ अग्नेनयसु० धेमस्वाहा अग्नयइदं० १ ॐ अग्नेत्वंपारया० शंयोःस्वाहा अग्नयइदं० २ ग्रीष्मइत्यादिचतुर्णांवामदेवस्त्रिष्टुब्विश्वेदेवाः होमेवि० ॐ ग्रीष्मोहेमंत० मायुःस्वाहा विश्वेभ्योदेवेभ्यइदं० ३ ॐ शांतापृथिवी० सर्वतःस्वाहा विश्वेभ्योदेवेभ्यइदं० ४ ॐ आपोम रीचीः० क्षराणिस्वाहा विश्वेभ्योदेवेभ्यइदं० ५ ॐ विश्वआदित्या० दधातुस्वाहा विश्वेभ्योदेवेभ्यइदं० ६ प्रजापतेहिर ण्यगर्भस्त्रिष्टुप्प्रजापतिः होमेविनि० ॐ प्रजापतेन० रयीणांस्वाहा प्रजापतयइदं० ७ स्विष्टकृद्धोमादिसमाप्य । ततोभूमि शोधनाद्यक्षय्यार्थमंत्रजपादियाश्राद्धप्रयोगंकेवलपार्वणवत्कृत्वांतेतर्पणंकुर्यात् ॥ इत्यष्टमीश्राद्धप्रयोगः ॥

अथापरेद्युरन्वष्टक्यश्राद्धप्रयोगः ॥ ॥ सचप्रायेणपूर्वेद्युःश्राद्धवत् । विशेषस्तूच्यते । संकल्पेपितृत्रयानंतरंमात्रादित्रयं पक्षेमातामहादित्रयंचोच्चार्य तृप्त्यर्थमित्यंते अन्वष्टक्यश्राद्धंकरिष्ये । विप्रान्निमंत्र्य संनिधाप्य दक्षिणाप्रवणदेशोपरिकृतेस्थं डिलेरेखादिसंस्कृतेऔपासनाग्निंनिधाय समंततोवस्त्रादिनापरिश्रित्योत्तरतोद्वारंकुर्यात् । नवापरिश्रयणम् । अग्निंप्रज्वाल्य येरू पाणीत्युल्मुकंप्रणीयपरिसमुह्य समूलदर्भैरकंपयन्त्रिवारंपूर्ववत्परिस्तीर्यपर्युक्ष्य स्थालीचतुष्टयसहितानिपात्राण्यासादयेत् । सकृ दाच्छिन्नद्वयंत्रयंवासाद्यप्रोक्षणादि । ओदनादिचरुत्रयश्रपणं । श्रपणकाले किंचिदोदनाग्रद्रव्यंपात्रेसंभृत्यमंत्रावृत्त्याद्वेतिस्रो वालेखाउल्लिख्याभ्युक्षणादि । स्रुवसंमार्गांते चतुर्थस्थाल्यांदधिमिश्रभर्जितयवपिष्टरूपान्दधिमंथान्निधाय चरुत्रयस्याभिघार णाद्यासादनांतेदधिमन्थानप्यवधिश्रित्याभिघारणाद्यासादनांतंकृत्वादक्षिणतअंजनाभ्यंजनेकशिप्वादीनांद्वयंत्रयंवासाद्य । भूमि

| | मू. | प्रे. व्य. |
|---|---|---|
| सूर्यसहस्रनामावलिः. | । | ८- |
| हिरण्यकेशीयो नित्यविधिः—(आपस्तम्बीयः). | ।- | ८- |
| आश्वलायनगृह्यसूत्रम्—( अध्यायचतुष्टयम् ). | । | ८- |
| ऋग्वेदमंत्रसंहिता—अस्या मंत्राः सूक्तानि च प्रायः प्रयोगक्रमेणैव संगृह्य छन्दऋष्यादिभिरलंकृतानि । प्रासंगिकानामैतरेयब्राह्मणखडानामपि संग्रहः कृतः। | ।॥= | । |
| ऋग्वेदसंहिता—परिभाषा—ऋग्विधान—सर्वानुक्रम—स्वाहाकारनिधिमंत्रकोशसहिता. | ३॥ | १८- |
| ऐतरेयब्राह्मणम्. | १ | । |
| ऐतरेयोपनिषत् ( अरणानि आश्वलायनीयानि ). | । | ८- |
| पवमानपंचसूक्तानि. | । | ८- |
| मंत्रसंहिता—हिरण्यकेशीया. | ॥= | ८= |
| रुद्रः—हिरण्यकेशीयः. | ८= | ८- |
| आचाररत्नम्—( आह्निकग्रन्थः ). | १ | । |

| | मू. | प्रे. व्य. |
|---|---|---|
| कुण्डार्कः—( १ मरीचिका, २ दीधिति, ३ पद्मिनी, ४ नौका, ५ मिताक्षरा, ६ सुप्रभाख्यटीकापट्केनोपेतः कुंडाकृतिसहितश्च।) ग्रन्थोऽयं केवलं १५ श्लोकात्मको गंभीरार्थकोऽस्ति । अस्योपरि बहुधो व्याख्या उपलभ्यन्ते। तासु मुख्यतमानां षण्णां संग्रहः कृतः। तथैव कुण्डमण्डपानां कुण्डानां च आकृतयः स्पष्टप्रतिपत्त्यर्थं योजिताः सन्ति । तथाच यज्ञोपयुक्तानां विविधकोष्टकानां परिशिष्टानां च संग्रहः कृतः। अस्याध्ययनेन पंचकुंडीनवकुंड्यादीनां सम्यग् ज्ञानं भविष्यति। | २ | ॥ |
| कुंडरत्नावलिः—(सटीका)६४ कुंडाकृतिसहिता । | १। | । |
| ब्रह्मकर्मसमुच्चयः—शुक्लयजुर्वेदी-यजुःशाखीयकर्मकाण्डप्रदीपः—विविधप्रयोगैस्तथा शास्त्रार्थैः परिपूर्णः । अस्मिन् रंगरंजितमंडलानि ६ ग्रहमंडलादीनि ३ सन्ति । शुक्लयजुःशाखीयैरपूर्वोऽयं ग्रन्थोऽवश्यं संग्राह्यः । | ४॥ | १ |

शोधनादिशुद्ध्यर्थमंत्रजपादिवाश्राद्धप्रयोगंकुर्यात् । होमेहविश्चतुष्कादवदानं । उदीरतामित्यादिमंत्रस्थानेसोमायेत्यादिप्राकृतमंत्राभ्यांद्वेआहुतीइतिविशेषः । पिंडार्थान्नेमधुमंथानामपिग्रहणं । स्त्रीपिंडार्थान्नेपूर्वसंभृतओदनाग्रद्रवोऽपिग्राह्यः । अर्घ्यपिंडादिमंत्रेपूहप्रकारस्तुमहालयप्रकरणेवक्ष्यते ॥ इत्यन्वष्टक्यश्राद्धप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

माघ्यावर्षश्राद्धंतु—एवमेवदिनत्रयेभाद्रपदस्यकृष्णपक्षेकार्यं । तच्चाष्टम्यनुसारेणकार्यमितिवृत्तौ । त्रयोदश्यनुसारेणेतिहरदत्तः । कस्मिंश्चिद्दिनत्रयेकार्यमितिमतांतरंतेनैवोक्तं । तत्रसंकल्पादावष्टकापदस्थानेमाघ्यावर्षशब्दप्रयोगइतिविशेषः ॥ ॥

एषुत्रिषुश्राद्धेषुविप्रसंख्यामाहाश्वलायनः—नवावरान्भोजयेदयुजोवेति । अस्यविवरणंशौनकः—नवावरान्द्विजानेषुत्रिषुकर्मसुभोजयेत् । अशक्तौसप्तपंचत्रीनयुग्मांश्चयथाबलं । सप्तत्वपक्षेपित्रादिद्वितयस्यत्रयस्त्रयः । वरणीयास्तृतीयस्यत्वेकएवविशिष्यते । पंचपक्षेपिपित्रर्थंवरणीयास्त्रयोन्ययोः । द्वयोःप्रत्येकमेकैकोवरणीयोविशिष्यते । इति ॥ ॥ छ ॥

॥ इतिदातारोपाह्वगंगाधरशास्त्रिपरिष्कृतपाकसंस्थाप्रयोगाः ॥

# अथनारायणभट्टविरचिताऽन्त्येष्टिपद्धतिः ॥

## ( उत्तरनारायणभट्टी )

सर्वप्रायश्चित्तप्रयोगः ॥ ॥ श्रीः ॥ भट्टरामेश्वरसुतोभट्टनारायणःसुधीः । नत्वाशिवौसंविचार्यकुरुतेंऽत्येष्टिपद्धतिं ॥ आसन्नमरणंपित्रादिं पुत्रादिः तीर्थेनीत्वाप्रायश्चित्तंकारयेत् तदीयंस्वयंवाकुर्यात् । तच्चपडब्दंत्र्यब्दंसार्द्धाऽब्दंवायथाशक्ति तदैवसुवर्णादिप्रत्याम्नायद्वाराकुर्यात् । संकल्पमात्रंवाकृत्वासूतकांतेकुर्यात् । तद्यथा । चतुरस्त्रीनेकंवाऽध्यात्मविदंपरिपत्त्वेनोपवेश्य कृतस्नानःशक्तौसत्यांक्लिन्नवासाःअभुंजानःपरिषदंप्रदक्षिणीकृत्यहृदयेनदूयमानोधरण्यांसाष्टांगंप्रणमेत् । ततस्तैःकिंतेकार्यमिध्यामावादीःसत्यमेववदेत्यादिपृष्टेपरिपदग्रेगोवृषयोःप्रत्येकंप्रत्याम्नायत्वेनयथाशक्तिस्वर्णरूप्ययोर्निष्कंतदर्द्धंतदर्द्धंवानिधायअमुकस्यमेजन्मप्रभृतिअद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणाऽपात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांनिरासार्थमनुग्रहंकृत्याप्रायश्चित्तमुपदिशंतुभवंतः । तथा सर्वेधर्मविवेक्तारोगोप्तारःसकलाद्विजाः । ममदेहस्यसंशुद्धिंकुर्वंतुद्विजसत्तमाः ॥

१ लौकिकरूढोऽयमुत्तरनारायणभट्टापरनामान्त्येष्टिप्रयोगोऽथात्र सर्वसौकर्याय सगृह्यते । २ स्वकीयपापापनुत्तयेईश्वरप्रीतिकामोऽपिवा प्रायश्चित्तं कुर्यात् । ३ प्रायोनामतपःप्रोक्तंचित्तंनिश्चयउच्यते । तपोनिश्चयसंयुक्तंप्रायश्चित्तमितिस्मृतं ॥ इतिप्रायश्चित्तशब्दार्थः ।

मयाकृतंमहाघोरंज्ञातमज्ञातकिल्बिषं । प्रसादःक्रियतांमह्यंशुभानुज्ञांप्रयच्छथ ॥ पूज्यैःकृतःपवित्रोऽहंभवेयंद्विजसत्तमैः । एवं प्रार्थयेत् । पुत्रादिश्चेत्प्रायश्चित्तकर्तातदाऽसच्छब्दस्थानेतन्नामनिर्दिशेत् । प्रार्थनानंतरंमामनुगृह्णंतुभवंतइतिप्रणमेत्। तत-स्तेतमुत्सार्यतस्यशरीरद्रव्यादिशक्तिमुत्तममध्यमादिपक्षाश्चविचार्यअस्मिन्पक्षेऽयंशक्तइतिनिश्चित्यपुस्तकवाचनपूर्वकंकथयेयुरनुवादकस्याग्रेप्रत्याम्नायांश्चशक्त्याकल्पयेयुः । अस्मिन्कालेप्रायश्चित्तीचंदनपुष्पादिभिःपुस्तकपूजांसभ्याऽनुवादकपूजांचविधाय निबंधपूजात्वेनचकिंचिद्यथाशक्तिद्रव्यंनिधायकृतांजलिपुटोनम्रस्तिष्ठेत् । अनुवादकायचपापानुसारेणभृतिरूपांदक्षिणांदद्यात् । ततोऽनुवादकःपूर्वोक्तविशेषणविशिष्टानांमहापातकव्यतिरिक्तानांपातकानांक्षयोऽनेनपरिषदुपदिष्टेनसर्वप्रायश्चित्तेनामुकप्रत्याम्नायद्वाराप्राच्योदीच्यांगसहितेनाऽऽचीर्णेनतवभविष्यति तेनत्वंकृतार्थोभविष्यसीत्युपदिशेत् त्रिः । तच्चसर्वप्रायश्चित्तंशक्त्यनुसारेणषडब्दंत्र्यब्दंसार्द्धाब्दमन्यद्वापरिषदोनुमतं। प्रत्याम्नायश्च गायत्र्ययुतजपेतिलहोमसहस्रेद्वादशब्राह्मणभोजनेतीर्थयोजनयात्रायांएकगोदानेसुवर्णरूप्यनिष्कतदर्द्धानांगोमूल्यानांशक्त्यादानेशुष्ककेशस्यद्वादशस्नानेषुद्विगुणद्वादशामान्नदानादौचएकः प्राजापत्यइति[१]। तत्रशक्तस्याऽमान्नंद्विगुणंद्रव्यंचतुर्गुणमित्यादियोज्यं। निष्कस्यप्रमाणंलोकशास्त्रयोरेकवाक्यतायांमाषाः। ४०। तदर्द्धं। २०। तदर्द्धं। १०। मुख्यंसुवर्णतदशक्तौरजतंग्राह्यं। ततोनिवेदितंप्रायश्चित्तंॐभवदनुग्रहइत्यंगीकृत्यसन्मानपूर्वकंप्रणम्य परिषदंविसृजेत् । अस्मिन्नहनिशक्तेनोपवासःकार्यः । इतरेणहविष्याशनं। ततःकस्यांचिद्रिक्तायांतिथौकृतमाध्याह्निकः साया

१ प्राजापत्येप्वशक्तस्तुधेनुंदद्यात्पयस्विनीं ।

ये.

॥

द्गंगादौदेशकालौसंकीर्त्यअमुकशर्मणोममजन्मप्रभृत्यद्ययावत्ज्ञानाज्ञानकामाकामसकृदसकृत्कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकपातकानांनिरासेनमरणकालेशुद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंवामुकप्रायश्चित्तममुकप्रत्याम्नायेनप्राच्योदीच्यांगसहितंयथाशक्तिकरिष्येइतिसंकल्प्य । यानिकानिचपापानिब्रह्महत्यासमानिच । केशानाश्रित्यतिष्ठंतितस्मात्केशान्वपाम्यहमितिमंत्रेणकक्षोपस्थशिखावर्जंनखरोमाणिवापयित्वाप्राङ्मुखोभूत्वाद्वादशांगुलदंतकाष्ठेन ॐ आयुर्बलंयशोवर्चःप्रजापशुवसूनिच । ब्रह्मप्रज्ञांचमेधांचतंन्नोदेहिवनस्पतइतिसंप्रार्थ्य[1] । मुखदुर्गंधनाशायदंतानांचविशुद्धये । ष्ठीवनायचगात्राणांदंतान्संशोधयाम्यहं[2] । इतिमंत्रेणदंतान्संशोध्यद्वादशगंडूषान्कृत्वाचम्यस्नात्वाभस्मादिस्नानानि[3]कुर्यात् । तत्रभस्मस्नानमेवं ॐईशानायनमइतिशिरसि ॐतत्पुरुषायनमइतिमुखे ॐअघोरायनमइतिहृदये ॐवामदेवायनमइतिगुह्ये ॐसद्योजातायनमइतिपादयोः । प्रणवेनसर्वांगे । यद्वा ॐअग्निरितिभस्म ॐ वायुरितिभस्मॐजलमितिभस्म ॐस्थलमितिभस्म ॐव्योमेतिभस्म ॐसर्वंहवाइदंभस्मेतिमंत्रैः । एवंभस्मनास्नात्वागोमयेनस्नायात् । गंधद्वारामितिगोमयंगृहीत्वा । यद्वा । अग्रमग्रंचरंतीनामोषधीनांवनेवने । तासामृषभपत्नीनांपवित्रंकायशोधनं । तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदेतिमंत्रेणगोमयस्नानं । अथ मृत्तिकास्नानं ॐबळित्थापर्वतानांखिद्रंबिभर्षिपृथिवि । प्रयाभूमिंप्रवत्वतिमह्नाजिनोषिमहिनि । इतिभूमिंप्रार्थ्य ॐमावोरिपत्खनितायस्मैचाहंखनामिवः । द्विपच्चतुष्पदस्माकंसर्वमस्त्वनातुरं । इति

१ त्वंनोदेहिवनस्पते इति वा पाठः । २ कुर्वेऽहंदंतधावनमित्यन्ये पेठुः । ३ दशस्नानानि ।

खनित्वा ॐस्योनापृथिविभवेतिमृदमादाय । ॐआयनेतेपरायणइतिदूर्वामादाय । गायत्र्याभ्युक्ष्यभूमौमृदंनिधायाचम्यदेशका लादिस्मृत्वामृत्तिकास्नानमहंकरिष्यइतिसंकल्प्यमृदंकुशोदकेनाभ्युक्षेत् ॐ त्रातारमिंद्रमवितारमिंद्रंहवेहवेसुहवंशूरमिंद्रं । ह्वया मिशक्रंपुरुहूतमिंद्रंस्वस्तिनोमघवाधात्विंद्रः। इतिपूर्वस्यां ॐ यमायमधुमत्तमंराज्ञेहव्यंजुहोतन । इदंनमऋषिभ्यःपूर्वजेभ्यःपूर्वेभ्यः पथिकृद्भ्यः । इतिदक्षिणतः ॐ तत्त्वायामीतिपश्चिमतः ॐ वयंसोमव्रतेतवमनस्तनूषुबिभ्रतः । प्रजावंतःसचेमहि । इत्युत्तरतः ॐ तत्सूर्यरोदसीउभेदोषावस्तोरुपब्रुवे । भोजेष्वस्माँअभ्युच्चरासदा । इत्युपरिष्टात् ॐ अधःपश्यस्वेत्यधः । ततोंगेषु ॐ सहस्रशीर्षे तिशिरसि ॐ अक्षीभ्यांतेनासिकाभ्यांकर्णाभ्यांछुबुकादधि । यक्ष्मंशीर्षण्यंमस्तिष्काज्जिह्वायाविवृहामिते । इतिमुखे ॐ ग्रीवा भ्यस्तउष्णिहाभ्यःकीकसाभ्योअनूक्यात् । यक्ष्मंदोषण्य१मंसाभ्यांबाहुभ्यांविवृहामिते । इतिग्रीवायां ॐ आंत्रेभ्यस्तेगुदाभ्यो वनिष्ठोर्हृदयादधि । यक्ष्मंमतस्नाभ्यांयक्नःप्लाशिभ्योविवृहामिते । इतिहृदये ॐ नाभानाभिंनआददेचक्षुश्चित्सूर्येसचा । कुवेरपं त्यमादुहे । इतिनाभौ ॐ त्वमिंद्रसजोषसमर्कंबिभर्षिबाह्वोः । वज्रंशिशानओजसा । इतिबाह्वोः ॐ सोमानंस्वरणंकृणुहिब्रह्मण स्पते । कक्षीवंतंयऔशिजः । इतिकक्ष्योः ॐ यःकुक्षिःसोमपातमःसमुद्रइवपिन्वते । उर्वीरापोनकाकुदः । इतिकुक्ष्योः ॐ बह्वी नांपिताबहुरस्यपुत्रश्चिश्चाकृणोतिसमनावगत्य । इषुधिःसंकाःपृतनाश्चसर्वाःपृष्ठेनिनद्धोजयतिप्रसूतः । इतिपृष्ठे ॐ ऊरुभ्यांतेअष्ठी वद्भ्यांपार्ष्णिभ्यांप्रपदाभ्यां । यक्ष्मंश्रोणिभ्यांभासदाद्भंससोविवृहामिते । इत्यूर्वोः ॐ मेहनाद्वनंकरणाल्लोमभ्यस्तेनखेभ्यः । यक्ष्मं

१ यमायसोमं इतिमंत्रेण इत्यन्ये ।

सर्वस्मादात्मनस्तमिदंविवृहामिते। इतिजान्वोः ॐएतावानस्येतिपादयोः ॐयस्यविश्वानिहस्तयोःपंचक्षितीनांवसु। स्पाशयंस्वयो अस्मद्‌ध्रुग्दुव्र्येवाशनिर्जहि। इतिहस्तयोः ॐ अंगादंगाल्लोम्नोलोम्नोजातंपर्वणिपर्वणि। यक्ष्मंसर्वस्मादात्मनस्तमिदंविवृहामिते। अनेनपुरुषसूक्तेनचसर्वांगोद्वर्तनं। एतावत्यशक्तौ ॐअश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे। शिरसाधारयिष्यामिरक्षस्वमांपदेपदे। भूमिर्धेनुर्धरणीलोकधारिणी। उद्धृतासिवराहेणकृष्णेनशतबाहुना। मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतं। मृत्तिकेब्रह्मदत्तासि काश्यपेनाभिमंत्रिते। मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितं। मृत्तिकेप्रतिष्ठितेसर्वंतन्मेनिर्णुदमृत्तिके। त्वयाहतेनपापेनगच्छामि परमांगतिं। इत्येतैर्मंत्रैःसर्वांगोद्वर्त्तनमात्रं। अश्वक्रांतइत्येवमादिभिःसतिलांसदूर्वांमृदंशिरसिनिधायमृत्तिकास्थानंप्रक्षाल्यतीर्थं प्रार्थयेत् ॐ हिरण्यशृंगंवरुणंप्रपद्येतीर्थंमेदेहियाचितः। यन्मयाभुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः॥ यन्मेमनसावाचाकर्मणावादु ष्कृतंकृतं। तन्नइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः॥ इमंमेगंगेइति०ऋक् १ ॐ इदंतेन्याभिरसमानमद्भिर्याःकाश्चसिंधुंप्र वहंतिनद्यः। सर्पोजीर्णामिवत्वचंजहातिपापंसशिरस्कोभ्युपेत्य। गंगागंगेतिमंत्रैः। ततः सुमित्र्यान०। समुद्रज्येष्ठाइतिचतसृभिः। एतोन्विंद्रमितितिसृभिः। तरत्समंदीतिसूक्तेन। यदंतियच्चदूरकेइतिपंचभिः। त्रिभिष्ट्वंइतिसप्तभिः। आपोहिष्ठेतितृचेनचमार्जनं कृत्वा। इमंमेगंगेइत्युदकमालोड्य ऋतंचेतितृचेनाघमर्षणंकुर्यात्। ततःप्रवाहाभिमुखस्त्रिवारंमज्जेत्। इतिमृत्तिकास्नानं। ततः आपोहिष्ठेतितृचेनशुद्धोदकस्नानंकुर्यात्। अथपंचगव्यस्नानानि। गायत्र्यागोमूत्रेण। गंधद्वारेतिगोमयेन। आप्यायस्वेतिक्षी

१ सुमित्र्यानआपओषधयःसंतु। इत्ययमेवमंत्रः।

रेण । दधिक्राव्णइतिदध्ना । घृतंमिमिक्षइतिघृतेन । देवस्यत्वेतिकुशोदकेनस्नानंकुर्यात् । देवस्यत्वेतिमंत्रांतेअभिषिंचामीति वाक्यशेषः । स्त्रीशूद्राणाममंत्रकाणिस्नानानि । एवंदशस्नानानिविधायस्नानांगतर्पणंकृत्वा । धौतेवाससीपरिधायद्विराचम्य विष्णूद्देशेनत्रिभ्योधिकान्युग्मान्ब्राह्मणान्पूजापूर्वकंभोजयेत् । आमान्नंवादद्यात् । इदमेवप्रायश्चित्तांगंविष्णुश्राद्धमित्यभिधीयते । ततः । गयामंगेपुतिष्ठंतिभुवनानिचतुर्दश । यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच॥इतिमंत्रेणादिगोदानंप्रत्यक्षंनिष्क्रयद्वारावाकुर्यात् । ततोग्निंस्थापनादिपूर्वकमाज्येनव्याहृतिभिःपापापहविष्णूद्देशेनाष्टाविंशतिमष्टोत्तरशतंवाऽऽहुतीर्जुहुयात् । ततः पंचगव्यंकार्यं । सुवर्णादिपात्रेपद्मादिपात्रेवा । ताम्रायागोमूत्रंत्रिपलंगायत्र्याप्रणवेनवाआदाय । ततोंगुष्ठार्धपरिमितंश्वेतायागोमयंगंधद्वारामित्यादाय । ततःकपिलायाःपयःसप्तपलमाप्यायस्वेत्यादाय । ततोनीलायाःसप्तपलमेवदधिदधिक्राव्णइत्यादाय । ततःकृष्णायाघृतमेकपलंघृतंमिमिक्षइत्यादाय । ततःएकपलंकुशोदकंआपोहिष्ठेत्यादाय । प्रणवेनालोड्यप्रणवेनैवयज्ञियकाष्ठेननिर्मथ्यप्रणवेनाऽभिमंत्र्यसप्तपत्रैर्हरितैःकुशैर्दशाहुतीर्जुहुयादेभिर्मंत्रैः । मंत्राश्च ॐइरावतीधेनुमतीहिभूतं०मयूखैःस्वाहा । पृथिव्याइदं ॐइदंविष्णुर्विचक्रमे०सुरेस्वाहा । विष्णवइदं ॐमानस्तोकेतनये०हवामहेस्वाहा । रुद्रायेदं ॐब्रह्मजज्ञानं०विवःस्वाहा । ब्रह्मणइदं ॐअग्नयेस्वाहा । अग्नयइदं ॐसोमायस्वाहा । सोमायेदं ॐतत्सवितुर्वरेण्यं०प्रचोदयात्स्वाहा । सूर्यायेदं ॐस्वाहा। आत्मनइदं ॐभूर्भुवःस्वःस्वाहा । प्रजापतयइदं ॐअग्नयेस्विष्टकृतेस्वाहा । अग्नयेस्विष्ट

---

१ इदंदशमंस्नानं । २ अत्राग्निर्विटनामा । प्रायश्चित्तेविटश्चैव इति स्मरणात् ।

कृतइदं । इतिहुत्वा । व्रतग्रहणंकरिष्यइतिद्विजान्पृष्ट्वा । तैःकुरुष्वेत्यभ्यनुज्ञातःप्रणवेनसर्वंपिबेत् । एतच्चग्रामाद्बहिर्नद्यादे
सीरेनक्षत्रदर्शनेकार्यं । अशक्तौतुगोमूत्रादिस्वल्पंग्राह्यं । सर्वस्यपेयत्वात् । अस्मिन्दिनेउपवासःशक्तस्य । अशक्तस्यहविष्या
शनं । इतिपंचगव्यंप्राश्यगृहमागत्यविष्णुंस्मरन्मौनीनिशामतिवाह्यप्रक्रांतंप्रायश्चित्तंसंकल्पानुसारेणप्रत्याम्नायद्वाराकृत्वाउत्तरां
गानिकुर्यात् । व्याहृतिभिराज्यंपूर्ववद्धुत्वापूर्ववत्पुनःप्रायश्चित्तांगंविष्णुश्राद्धंकृत्वांतेगोदानंपूर्ववच्चरेत् । एवंप्रायश्चित्तंकृत्वा
शक्तौसत्यांदशदानान्यपिकुर्यात् । तानिच । गोभूतिलहिरण्याज्यवासोधान्यगुडानिच । रौप्यंलवणमित्याहुर्दशदानानिपंडि
ताःइत्युक्तानि । तत्रगवामंगेषुतिष्ठत्यनेनगावोमेअग्रतइत्यनेनवागौर्देया ॥ १ ॥ सर्वभूताश्रयाभूमिर्वराहेणसमुद्धृता । अनंतसस्य
फलदाअतःशांतिंप्रयच्छमे । इतिभूमिर्देया ॥ २ ॥ महर्षेर्गोत्रसंभूताःकश्यपस्यतिलाःस्मृताः । तस्मादेषांप्रदानेनममपापंव्यपो
हतु । इतितिलादेयाः ॥ ३ ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः । अनंतपुण्यफलदमतःशांतिंप्रयच्छमे । इतिहिरण्यं ॥ ४ ॥
कामधेनुषुसंभूतंसर्वक्रतुषुसंस्थितं । देवानामाज्यमाहारमतःशांतिंप्रयच्छमे । इत्याज्यं ॥ ५ ॥ शरण्यंसर्वलोकानांलज्जायारक्षणं
परं । सुवेषधारिवस्त्रत्वमतःशांतिंप्रयच्छमे । इतिवस्त्रं ॥ ६ ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् । प्राणिनांजीवनोपायमतः
शांतिंप्रयच्छमे । इतिधान्यदानं ॥ ७ ॥ यथादेवेषुविश्वात्माप्रवरश्चजनार्दनः । सामवेदस्तुवेदानांमहादेवस्तुयोगिनां । प्रणवः
सर्वमंत्राणांनारीणांपार्वतीयथा । तथारसानांप्रवरःसदैवेक्षुरसोमतः । ममतस्मात्परांलक्ष्मींददस्वगुडसर्वदा । इतिगुडं ॥ ८ ॥

१ दानान्येतानिवैदश इति वा पाठः ।

प्रीतिर्यतःपितॄणांचविष्णुशंकरयोःसदा । शिवनेत्रोद्भवंरौप्यमतःशांतिंप्रयच्छमे । इतिरजतदानं ॥ ९ ॥ यस्मादन्नरसाःसर्वेनो त्कृष्टालवणंविना । शंभोःप्रीतिकरंनित्यमतःशांतिंप्रयच्छमे । इतिलवणं ॥ १० ॥ एवंदशदानानिदत्त्वा । मंत्रहीनमितिवदन् विष्णुंस्मरेत् । एतानिदशदानानिसभ्येभ्यएव । तदसंभवेअन्येभ्योपि ॥ ततःयन्मयाकृतममुकप्रायश्चित्तंतदच्छिद्रमस्त्वितिकर्त्रा उक्ते । अच्छिद्रमस्त्वितिब्राह्मणाःप्रतिब्रूयुः । यद्वा । व्रतच्छिद्रंतपश्छिद्रंयच्छिद्रंयज्ञकर्मणि । सर्वंभवतुमेऽच्छिद्रंयस्यचेच्छंतिवै द्विजाः अच्छिद्रमस्त्वितिप्रतिवचनं । एतत्प्रायश्चित्तमकृत्वैवयदिपित्रादिर्मृतस्तदापातकसत्तानिश्चयेपुत्रादिनाइदमवश्यंकार्यं । अनिश्चयेनावश्यकं । पुत्रादिनाकरणेपंचगव्यप्राशनाभावः । मरणानंतरंऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टस्पृष्टास्पृष्टमरण खट्वामरणबंधनमरणादिषुसत्सुत्रीन्षड्द्वादशपंचदशवाकृच्छ्रान्प्रायश्चित्तं निमित्तानुसारेण ब्राह्मणवचनाद्गृहीत्वाशक्तौतद्दैवतस्य त्याम्नायतयाहिरण्यादिदत्वाशुद्धिंसंपाद्यदहनादिकुर्यात् । शक्ताभक्ताःपुत्रादयः पित्रादेःपापिनःसर्वात्मनाशुद्धीच्छवःसर्वप्राय श्चित्तेष्वन्यतमत्कृत्वादहनादिकुर्युः । एवंकर्ताप्यधिकाराभावेशक्त्यात्र्यादिकृच्छ्ररूपांशुद्धिमात्मनःसंकल्पेनतद्दैववाप्रत्याम्नाये नसंपाद्यदहनादिकुर्यात् । अन्यथाव्यर्थंभवतिसर्वं । अथोत्क्रांतिधेनुंदरिद्रायकुटुंबिनेश्रोत्रियायब्राह्मणायदद्यात् । अद्येत्यादि कालंस्मृत्वाअमुकगोत्रस्यामुकशर्मणोममसुखेनप्राणोत्क्रमणप्रतिबंधकोक्तनिष्कृत्यनुक्तनिष्कृतिसकलपातकक्षयद्वारासुखप्राणोत्क्र मणार्थंयथाशक्त्यलंकृतामिमामुत्क्रांतिधेनुंरुद्रदैवत्याममुकगोत्रायामुकशर्मणेतुभ्यंसंप्रददे । गवामंगेष्वितिमंत्रमुक्त्वानममेति

१ तन्निष्क्रयंसुवर्णरजतनिष्कतदर्धतदर्धादिकंवा २ गोःपुच्छंगृहीत्वादद्यात् ।

दद्यात् । पित्रादेरशक्तौपुत्रादिर्दद्यात् । तत्रममेतिपदस्थानेपित्रादेरितिविशेषः । धेन्वभावेप्रत्याम्नायत्वेनद्रव्यंदद्यात् । ततोवैतरणीदानं । आचम्यप्राणानायम्यतिथ्यादिकथनानिकृत्वापूर्ववन्ममेत्यंतमुक्त्वायमद्वारस्थितवैतरण्याख्यनद्युत्तरणार्थंगोदानमहंकरिष्ये । ब्राह्मणंपादप्रक्षालनगंधमाल्यवस्त्रादिभिर्यथाशक्त्यभ्यर्च्यतद्धस्ते शिवाआपःसंतु । सौमनस्यमस्तु । अक्षतंचारिष्टंचाऽस्तु । यच्छ्रेयस्तदस्तु । यत्पापंतत्प्रतिहतमस्तु । धेनुकेत्वंप्रतीक्षस्वयमद्वारेमहाभये । उत्तितीर्षुरहंदेविवैतरण्यैनमोस्तुते । इतिधेनुंप्रार्थ्य । विष्णुरूपद्विजश्रेष्ठभूदेवद्विजपावन । ततुंवैतरणीमेनांकृष्णांगांप्रददाम्यहमितिब्राह्मणंप्रार्थ्य । अद्येत्यादिवैतरणीसंतरणार्थमिमांगांकृष्णवस्त्ररक्तमाल्याद्यलंकृतांयथाशक्तिसदक्षिणांतुभ्यंसंप्रददे । यमद्वारेपथेघोरेघोरावैतरणीनदी । तांततुंकामोयच्छामिकृष्णांवैतरणींतुगां । नममेत्युक्त्वाविप्रहस्तेजलंक्षिपेत् । कृष्णायाअभावेऽन्यवर्णापिदेया । गोरभावेद्रव्यंदेयं । तस्याशक्तौपुत्रादिर्दद्यात् । तत्रआद्येमंत्रेउत्तितीर्षुरयमितिपठेत् । द्वितीयेततुंवैतरणीमस्येति । तृतीयेतांततुंमस्येति । ततःतिलपात्रदानं । यथाशक्तिकांस्यपात्रेतिलान्क्षिप्त्वासुवर्णंच । अद्येत्यादिजन्मप्रभृतिमरणांतंकृतनानाविधपापप्रशमनार्थंतिलपात्रदानंकरिष्ये । ततोविप्रस्यपादप्रक्षालनगंधमाल्यादिभिर्यथाशक्तिपूजनंकृत्वा । ममजन्मप्रभृतिमरणांतंनानाविधपापनाशार्थंतिलपात्रंसदक्षिणममुकगोत्रायामुकशर्मणेतुभ्यंसंप्रददे । तिलाःपुण्याःपवित्राश्चतिलाःसर्वकराःस्मृताः । शुक्लावायदिवाकृष्णाऋषिगोत्रसमुद्भवाः । यानिकानिचपापानिब्रह्महत्यासमानिच । तिलपात्रप्रदानेनतानिनश्यंतुसर्वदा । महर्षेर्गोत्रसंभूताःकश्यप

१ सन्तुशिवाआपः । अस्तुसौमनस्यं । अस्त्वक्षतमरिष्टंच इत्यादीनिप्रतिवचनानि ।

श्रीगणेशायनमः ॥ नमःश्रीवेदपुरुषाय ॥ श्रीरामंसपरीवारंगणेशंचसरस्वतीम् । आश्वलायनंतच्छिष्यान्प्रणम्यपितरंगुरुम्
॥ १ ॥ भट्टरामेश्वरसुतोभट्टनारायणःसुधीः । प्रयोगरत्नंकुरुतेकाश्यांशिष्टेष्टतुष्टये ॥ २ ॥ ग्रंथेऽस्मिन्गुणगणवत्त्वमुच्यतेचे
त्स्वंग्रंथंगुणगणवंतमाहकोन । तत्संतःशिरसिकृतांजलिस्तुयाचेशोध्यंतत्सदसदिहोच्यतेमयायत् ॥ ३ ॥ ॥ अथ
संस्काराः ॥ तेचाष्टाचत्वारिंशत् । तथाचगौतमः—गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनय
नानिचत्वारिवेदव्रतानिस्नानंसहधर्मचारिणीसंयोगःपंचानांयज्ञानामनुष्ठानम्, अष्टकापार्वणःश्राद्धंश्रावण्याग्रहायणीचैत्रीआश्व
युजीतिसप्तपाकसंस्थाः, अग्न्याधेयमग्निहोत्रंदर्शपूर्णमासौचातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबंधःसौत्रामणीतिसप्तहविर्यज्ञसंस्थाः,
अग्निष्टोमोऽत्यग्निष्टोमउक्थ्यःषोडशीवाजपेयोऽतिरात्रोऽप्तोर्यामइतिसप्तसोमयज्ञसंस्थाइत्येतेचत्वारिंशत्संस्काराः । अष्टावात्म-
गुणाः दयासर्वभूतेषुक्षांतिरनसूयाशौचमनायासोमांगल्यमकार्पण्यमस्पृहेति । यस्यैतेचत्वारिंशत्संस्कारा अष्टावात्मगुणाश्चसब्र
ह्मणःसायुज्यमाप्नोतीति । पार्वणःपार्वणस्थालीपाकः । श्राद्धममावास्यादि । श्रावणीतत्रकर्तव्यंश्रवणाकर्म । आग्रहायणीतत्र
कर्तव्यंप्रत्यवरोहणम् । चैत्रीतत्रकर्तव्यःशूलगवः । आश्वयुजीतत्रकर्तव्यमाश्वयुजीकर्मेतिहरदत्तोव्याचख्यौ । अंगिरसातु—
पंचविंशतिसंस्काराउक्ताः—पंचविंशतिसंस्कारैःसंस्कृतायेद्विजातयः । तेपवित्राश्चयोग्याःस्युःश्राद्धादिषुसुयंत्रिताः ॥ आदि

१ अंगिराः—चित्रकर्मयथानेकैरंगैरुन्मील्यतेशनैः । ब्राह्मण्यमपितद्वत्स्यात्संस्कारैर्विधिपूर्वकैः ॥ स्वेस्वेगृह्येयथाप्रोक्तास्तथासंस्कृतयोऽखि-
लाः । कर्तव्याभूतिकामेननान्यथासिद्धिमृच्छति ॥ इति ।

स्यतिलाःस्मृताः । तस्मात्तेषांप्रदानेनममपापंव्यपोहतु । नममेतिविप्रहस्तेजलंक्षिपेत् । पुत्रादिस्तुअस्यपापंव्यपोहत्वितिवदेत् । यद्वा । अयंमंत्रः । योदेवःपितृरूपेणहव्यकव्यभुगव्ययः । तिलपात्रप्रदानेनसमेविष्णुःप्रसीदत्विति । दात्रंतरेसोस्यविष्णुरिति पठेत् । एतन्मंत्रपक्षेविष्णुप्रीतिरेवफलत्वेनोल्लेख्या । ततोगोमयोपलिप्तभूमौकुशानामुपरिउपविष्टोदक्षिणशिराःशायितोवा । तुलस्यूर्ध्वपुंड्रगंगामृत्तिकादिपवित्रैरलंकृतःपरमेश्वरंस्मरन्पुत्रोत्संगेधारितशिरास्तिष्ठेत् । ततःअद्येत्यादिअमृतत्वप्राप्तिकामनया पुण्यसूक्तादिपाठमहंकरिष्येश्रोष्येवा । नानानमितिसूक्तस्य । शिशुरांगिरसऋषिः । पवमानःसोमोदेवता । पंक्तिश्छंदः । अमृतत्वप्राप्तयेजपेविनियोगः । श्रवणेवाविनियोगः । ततोनानानमित्यादिसूक्तंस्वयंजपेत् । नानानंवाउनोधियोविव्रतानिजनानां । तक्षारिष्टंरुतंभिषग्ब्रह्मासुन्वंतमिच्छतींद्रायेंदोपरिस्रव । जरंतीभिरोषधीभिःपर्णेभिःशकुनानां । कार्मारोअश्मभिर्द्युभिर्हिरण्यवंतमिच्छतींद्रायेंदोपरिस्रव । कारुरहंततोभिषगुपलप्रक्षिणीनना । नानाधियोवसूयवोनुगाइवतस्थिमेंद्रायेंदोपरिस्रव । अश्वोवोळ्हासुखंरथंहसनामुपमंत्रिणः । शेपोरोमण्वंतौभेदौवारिन्मंडूकइच्छतींद्रायेंदोपरिस्रव ॥ १ ॥ शर्यणावतिसोममिंद्रःपिबतुवृत्रहा । बलंदधानआत्मनिकरिष्यन्वीर्यंमहदिंद्रा० । आपवस्वदिशांपतआर्जीकात्सोममीढ्वः । ऋतवाकेनसत्येनश्रद्धयातपसासुतइंद्रायेंदो० । पर्जन्यवृद्धंमहिषंतंसूर्यस्यदुहिताभरत् । तंगंधर्वाःप्रत्यगृभ्णन्तंसोमेरसमादधुरिंद्रा० । ऋतंवदन्नृतद्युम्नसत्यंवदन्सत्यकर्मन् । श्रद्धांवदन्त्सोमराजन्धात्रासोमपरिष्कृतइंद्रायेंदो० । सत्यमुग्रस्यबृहतस्संस्रवंतिसंस्रवाः । संयंतिरसि

१ पुनर्बहुत्वेज्येष्ठपुनस्यांकेधारितशिरास्तिष्ठेत् । २ आदिशब्देनान्यानिपुण्यसूक्तानिपुरुषसूक्तविष्णुसूक्तानिगीतासहस्रनामादिकंच ।

नोरसाःपुनानोब्रह्मणाहरइंद्रायेंदो० ॥ २ ॥ यत्रब्रह्मापवमानछंदस्यांवाचंवदन् । ग्राव्णासोमेमहीयतेसोमेनानंदंजनयन्निं
द्रायेंदो० । यत्रज्योतिरजस्रंयस्मिँल्लोकेस्वर्हितं । तस्मिन्मांधेहिपवमानामृतेलोकेऽअक्षितइंद्रायेंदो० । यत्रराजावैवस्वतोयत्रा
वरोधनंदिवः । यत्रामूर्यह्वतीरापस्तत्रमाममृतंकृधींद्रायेंदो० । यत्रानुकामंचरणंत्रिनाकेत्रिदिवेदिवः । लोकायत्रज्योतिष्मंतस्त
त्रमाममृतंकृ० । यत्रकामानिकामाश्चयत्रब्रध्नस्यविष्टपं । स्वधाचयत्रतृप्तिश्चतत्रमाममृतं० । यत्रानंदाश्चमोदाश्चमुदःप्रमुदआ
सते । कामस्ययत्राप्ताःकामास्तत्रमाममृतं० ॥ ३ ॥ यइंदोःपवमानस्यानुधामान्यक्रमीत् । तमाहुःसुप्रजाइतियस्तेसोमाविध
न्मनइंद्रायेंदो० ॥ ऋषेमंत्रकृतांस्तोमैःकश्यपोद्वर्धयन्गिरः । सोमंनमस्यराजानंयोजज्ञेवीरुधांपतिरिंद्रायेंदो० ॥ सप्तदिशोना
नासूर्याःसप्तहोतारऋत्विजः । देवाआदित्यायेसप्ततेभिःसोमाभिरक्षनइंद्रायेंदो० ॥ यत्तेराजञ्छृतंहविस्तेनसोमाभिरक्षनः ।
अरातीवामानस्तारीन्मोचनःकिंचनाममदिंद्रायेंदो० ॥ ४ ॥ यत्रतत्परमंपदंविष्णोर्लोकेमहीयते । देवैःसुकृतकर्मभिस्तत्रमा
ममृतंकृधींद्रायेंदो० ॥ यत्रतत्परमाव्ययंभूतानामधिपातिः । भावभावीचयोगीचतत्रमाममृतंकृधींद्रायेंदो० ॥ यत्रगंगाचयमुना
यत्रप्राचीसरस्वती । यत्रसोमेश्वरोदेवस्तत्रमाममृतंकृधींद्रायेंदो० ॥ ५ ॥ इतिनानानंसूक्तं । अन्योवाश्रावयेत् । नानानमि
तिसूक्तंतुअंतकालेसदापठेत् । जन्माचैवपरंस्थानममृतत्वंसगच्छतीतिऋग्विधानवचनात् । ततउपनिषद्भागान्अन्यानिचपुण्य
सूक्तानिगीतांस्तोत्राणिसहस्रनामादीनिचपठेत् । शृणुयाद्वा । श्रोतुःसंकल्पाशक्तौश्रावयिताऽमुकशर्मणोस्यामुकफलप्राप्तये

१ ब्रह्मविदाप्नोतिपरं इत्याद्युपनिषद्भागाः ।

मुकंश्रावयिष्येइतिसंकल्पयेत् । श्रीरामादिस्मरणंचकार्यं । प्राणोत्क्रमणानंतरंचायुजःसजातीयाब्राह्मणादयःअतरुणामुक्तकेशाः शवंप्रच्छादितमुखंप्राक्शिरसमूर्ध्वमुखंदाहदेशंप्रतिनयेयुः । स्मार्तोग्निःश्रौतावाग्नयःशवाग्रेनेतव्याः । प्रेताग्निमध्येन्यैर्नगंतव्यं । सर्वेबांधवाअधःकृतोपवीताःअप्रावरणामुक्तकेशाःवृद्धपुरःसराःप्रेतमनुगच्छेयुः । यदिगृहेमृतस्तर्हिब्राह्मणोनगरपश्चिमद्वारेणनेयः क्षत्रियउत्तरद्वारेण वैश्यःपूर्वेण शूद्रोदक्षिणेन । दाहदेशस्तुग्रामादाग्नेयेनैर्ऋत्येवामध्योन्नतःसर्वतोनिम्नोऽनावरणोबहुलौपधिश्च । तंदेशंप्राप्यशवमर्वागेवनिधायतद्देशात्कंटकादीनिसमूलान्यपास्येत् । ततःकर्तादेशकालौस्मृत्वा । पित्रादेरूर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्पृश्यस्पृष्टमरणखट्वामरणादिजनितप्रत्यवायपरिहारार्थंपंचदशषट्त्रीन्वाकृच्छ्रान्यथाशक्तिप्रायश्चित्तमुकप्रत्याम्नायेनसद्यःसूतकांतेवाकरिष्येइतिसंकल्प्य । शक्तौसत्यांतदैवद्रव्यादिनाऽशक्तौसूतकांतेवाकुर्यात् । कर्ताप्यात्मशुद्धौदेशकालस्मरणंकृत्वाआत्मशुद्धिद्वारापित्रादेरौर्ध्वदेहिकाधिकारसिद्ध्यर्थंशक्तौएतावदेवकृच्छ्रत्रयंवाप्रायश्चित्तंकरिष्येइतिसंकल्प्यतदैवसूतकांतेवाकुर्यात् । ततःकर्ताअन्येचपुत्राःकक्षोपस्थशिखावर्जंलोमनखानिवापयेयुः । कर्त्रतिरिक्तानांदशमेह्निवावपनंयथाचारं । कर्तुश्चदशमेहनि । भर्तरिमृतेपत्न्याअपिआद्येदशमेह्निवावपनंयथाचारंकार्यं । ततःकर्ताअहतेनप्रत्यग्रेणवाससात्रिभिर्भागैःशिरःप्रभृत्यंगुलीपर्यंतंपादतलवर्जंप्रेतंप्राक्शिरसमाच्छाद्यचतुर्थभागंतस्यछित्त्वातेनात्मनउत्तरीयंकुर्यात् । द्वादशाहांतंप्रेतकृत्येतदेवधार्यं । ततोदहनदेशतोवायव्यांदिशिस्मार्ताग्निंनिदध्यात् । यदिविच्छिन्नोग्निस्तर्हियतोविच्छेदस्ता

१ निवीतिनइतियावत् । २ दशमेऽह्निपुनःक्षौरंकर्ताकुर्यादित्यर्थः ।

यत्कालगणनयाग्निविच्छेदप्रायश्चित्तंतदेवकुर्यात् । संकल्पयेद्वा । तच्चनास्तिक्यादग्नित्यागेमासद्वयेकृच्छ्रंकार्यं । मासचतुष्टयेऽतिकृच्छ्रः । षण्मासोर्ध्वंचांद्रादिष्वेकं । संवत्सरादूर्ध्वंत्रैमासिकंद्वैमासिकंवा । आलस्यादिनाग्नित्यागेवृद्धादशाहातिक्रमेत्र्यहमुपवासः । मासातिक्रमेद्वादशाहमुपवासः । संवत्सरातिक्रमेमासोपवासः । पयोभक्षणंवा । प्रमादादग्नित्यागेआत्रिरात्राद्वादशलघुप्राणायामाः । आषडहाच्चतुर्विंशतिः । आद्वादशाहात्पंचाशत् । आविंशत्यहाच्छतं । आमासादुपवासः । आषष्टिरात्राग्निरात्रं । संवत्सरारकार्यं । ( अतःपरंप्रत्यब्दंकार्यं ) । संवत्सरोर्ध्वमग्नित्यागेचांद्रं । द्विवर्षत्यागेचांद्रंसोमायनंचचांद्रद्वयंवा । त्रिवर्षत्यागेकृच्छ्राब्दंगोदानंचेत्यादि । अत्रप्रत्याम्नायाःकल्प्याः । यावत्कालंविच्छेदस्तावदाहुतिपरिमितंहोमद्रव्यंचदद्यात् । ततःप्राणायामोऽमंत्रकः । एवंसर्वप्रेतकृत्येषु । सर्वंप्रेतकृत्यंप्राचीनावीतिनाकार्यं । दक्षिणापवर्गंच । ततः कालंस्मृत्वा अमुकशर्मणोस्याग्निविच्छेदनिमित्तकंदाहायाग्निसिद्ध्यर्थंचप्रेताधानंकरिष्येइतिसंकल्प्य । पालाशोदुंबराश्वत्थशमीवैकंकतांघ्रिजं । वल्मीकोखरवाराहमूषकोत्खातमृत्तिकाः । वालुकासिकतारक्षाऽशनिध्वस्ततरुत्वचः । यथालाभमेतान्संभारान्संपाद्य तेषुलौकिकोग्निप्रतिष्ठाप्य । अयाश्चेत्यस्यविमदोऽयाअग्निःपंक्तिः । लौकिकस्याग्नेरौपासनत्वसिद्ध्येआज्यहोमेविनियोगः । ॐ अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्त्वमयाअसि । अयासावयसाकृतोयासन्हव्यमूहिषेयानोधेहिभेषजंस्वाहा[3] । अनयैकाज्याहुतिंजुहुयात् । यस्यामयोजुह्वतोमांसकामाःसंकल्पयंतोयजमानमांसं । ( ध्यायंतु ) जानंतुतेहविषेसादितायस्वर्गंलोकमिमंप्रेतंनयं

१ प्राजापत्यःकृच्छ्रइविपर्यायौ । २ भूर्भुवःस्वःअग्निंप्रतिष्ठापयामि इति । ३ अयसेऽग्नयइदंनममेतित्यागः ।

तुस्वाहा । स्वरिदंनमम । इत्यप्याहुतिंकेचिदाहुः । आहिताग्नेरेवेमामपरे । ततोभूरादिव्याहृतिचतुष्टयंजुहुयात् । एवमौपासनःसिद्धोभवति । पत्नीमरणेप्येवं । निरग्निकस्यब्रह्मचार्यादेःनिरग्निकायाअपिवाकपालाग्निः । अग्निवर्णकपालंतुकृत्वातत्रविनिक्षिपेत् । करीषादिततोयस्तुजातःसतुकपालजः । अनुपनीताविवाहितयोरप्येवं । विधवाविधुरयोरुत्तपनीयकः कपालाग्निरेववा । दर्भैरग्निंतुप्रज्वाल्यपुनर्दर्भैस्तुसंयुतः । पुनर्दर्भैस्तृतीयोग्निरेषउत्तपनीयकः ॥ लौकिकेनवासर्वेषांदाहः । आहिताग्नेवैताग्निभिस्त्रिभिः । ततःपूर्वोक्तेदाहदेशेआग्नेय्यांनैर्ऋत्यांवाऊर्ध्वबाहुनरायामंईशानीनैर्ऋत्यायतंपंचारत्नितिर्यगायतंद्वादशांगुलिपरिमिताधःखातंदक्षिणाप्रवणमाग्नेयीप्रवणंवागर्तंखानयेत् । तस्यवायव्यामग्नेर्निधानं । दाहगर्तादीशानेजानुमात्रंवितस्तिमात्रंवागर्तंकृत्वातत्रावकाशैर्शैवालंउदकंचनिक्षिपेत् । इदंगर्तोदकंनाम । अथप्रेतस्यमृज्जलाभ्यांमलंप्रक्षाल्यस्नापयित्वातिलकादिकारयित्वावस्त्रंपरिधाप्यप्रेतंजटामांस्यानुलिप्यनलदमालांप्रतिमुंचेत् । नलदाभावेतत्प्रतिनिधिंजपांकेचिदाहुः । ततःकर्तापादौप्रक्षाल्याचम्यामंत्रकंप्राणायामंकृत्वाअद्येत्यादिदेशकालौस्मृत्वामुकगोत्रस्यामुकशर्मणोस्मत्पित्रादेःप्रेतस्यप्रेतत्वविमोक्षार्थमौर्ध्वदेहिकंकरिष्येइतिसंकल्प्यप्राचीनावीतीभूमिंप्रार्थयेत् । उपसर्पेतिसंकुसुकःपितृमेधस्त्रिष्टुप् । भूमिप्रार्थनेविनियोगः । उपसर्पमातरंभूमिमेतामुरुव्यचसंपृथिवींसुशेवां । ऊर्णम्रदायुवतिर्दक्षिणावतएषात्वापातुनिर्ऋतेरुपस्थात् । अपसर्पतयेप्रेतायेकेचिदि

१ यस्याग्नयइतिमंत्रेणाज्याहुतिंकेचिदिच्छंति । त्यागश्चस्वरिदंनमम इति । मंत्रेस्वरितिलिंगात् । २ नलदंनाम 'वाळा' इतिप्राकृतभाषायां उशीरमित्यर्थः ।

हपूर्वजाः । स्वस्तिनःकृणुतमाशुआपातःपुनरागमत् । दिविजाताअप्सुजातायाजाताओषधीभ्यः । अथोयाअद्रिजाआपस्तानः शुंधंतुशुंधनीः । इतिभूमिंप्रोक्षेदित्यन्ये । अन्येतु अपसर्पेतिमंत्रेणभूम्यनुमंत्रणं दिविजाताइत्यनेनचस्थलशुद्धिरित्याहुः । ततःशमीशाखयोदकेनचखातंत्रिःपरिमृजन्प्रोक्षेदपेतेतिमंत्रांते । अपेतेतियमःपितरस्त्रिष्टुप् । भूमिप्रोक्षणेवि० ॐ अपेतवीत विचसर्पतातोस्माएतंपितरोलोकमक्रन् । अहोभिरद्भिरक्तुभिर्व्यक्तंयमोददात्यवसानमस्मै । गर्तोदकेनप्रोक्षेदित्यन्ये । ततोय मायदहनपतयेचोल्लिखामि । कालायदहनपतयेचोल्लिखामि । मृत्यवेदहनपतयेचोल्लिखामीतिमंत्रत्रयेणरेखात्रयमायसेनोल्लि खेत् । ततःखातेहिरण्यशकलानितिलांश्चप्रक्षिप्यतिलोदकंप्रक्षिपेत् । यमायदहनपतयेपितृभ्यःस्वधानमइतिमध्ये । कालायद हनपतयेपितृभ्यःस्वधानमइत्युत्तरतः । मृत्यवेदहनपतयेपितृभ्यःस्वधानमइतिदक्षिणतः । केचिल्लोहोल्लेखनंनकुर्वंति । प्रेता स्येतिलान्क्षिप्त्वा । सजातीयाहृतैर्यज्ञियकाष्ठैरेवदहनपर्याप्तांचितिंकारयेत् । तदुपरिबर्हिरास्तीर्यतदुपरिकृष्णाजिनमूर्ध्वलोम स्तृणीयात् । ततःप्रेतमग्नेरुत्तरेणनीत्वादक्षिणशिरसंचितौनिवेशयेत् । प्रेतस्योत्तरतःपत्नींचितौनिवेशयेत् । तांदेवरःशिष्यो वाजरद्दासोवोत्थापयेदुदीर्ष्वेतिमंत्रेण । दासपक्षेकर्तुर्मंत्रपाठोनतुतस्य । उदीर्ष्वेत्यस्यसंकुसुकःपितृमेधस्त्रिष्टुप् । उदीर्ष्वनार्य भिजीवलोकंगतासुमेतमुपशेषएहि । हस्तग्राभस्यदिधिषोस्तवेदंपत्युर्जनित्वमभिसंबभूथ ॥ ततःकर्ताप्रेतस्यमुखेनासिकाद्वये

१ अग्रदक्षिणंत्रिःप्रोक्षणं । प्रतिप्रोक्षणंमंत्रावृत्तिः । २ कुशमूलेनवोल्लिखेत् । ३ प्रेतपत्न्युत्थापनेविनियोगः ।

चक्षुर्द्वयेश्रोत्रद्वये । एवंसप्तच्छिद्रेषुहिरण्यशकलानिनिक्षिपेत् । तदभावेआज्यबिंदून्वा । प्रेतशरीरेघृत कांस्तिलान्प्रक्षिप्याग्निं परिसमुह्यचितिसहिताग्निंपरिस्तीर्यपर्युक्ष्यदक्षिणतोऽग्नेःप्रोक्षणींस्रुवंचमसमाज्यभाजनंचेतिपात्राण्यासादयेत् ॥ ततःगर्तोदकंचमसेआसिच्यदर्भैःप्रच्छाद्यप्रणयेत् । कारिकायांतुवह्नेरुत्तरतःपात्रासादनंचमसप्रणयनंच । प्रभूतमाज्यंबर्हिश्चोपकल्पयेत् । इममग्नइत्यस्यदमनोग्निस्त्रिष्टुप् । चमसानुमंत्रणेवि० ॥ इममग्नेचमसंमाविजिह्वरःप्रियोदेवानामुतसोम्यानां । एषयश्चमसोदेवपानस्तस्मिन्देवाअमृतामादयंते । इतिपूर्वस्थापितचमसानुमंत्रणंकुर्यात् । ततःकृष्णपक्षेअहर्मरणेप्रातराहुतिमारभ्यरात्रिमरणेसायमाहुतिमारभ्यपक्षहोमवन्मरणदिनादिदर्शपर्यंतंदिनसंख्ययाचतस्रश्चतस्रआहुतीर्जुहुयात् । दर्शस्थालीपाकंचकुर्यात् । शुक्लपक्षेरात्रिमृतस्यप्रातराहुतीर्जुहुयात्। अथप्रेतोपासनं। अद्येत्यादिप्रेतोपासनंकरिष्यइतिसंकल्प्यसमिद्द्वयमादाय। अग्निंकामंलोकंअनुमतिंएताःप्रधानदेवताअग्न्याज्येनयक्ष्ये । प्रेतंप्रेतोरसिआज्येन । यद्वापृषदाज्येनयक्ष्ये । भूर्भुवःस्वःस्वाहेतिसमिद्द्वयंजुहुयात् । प्रजापतयइदंनममेतित्यागः । परिसमुह्यचितिसहितमग्निंपरिस्तीर्यपर्युक्ष्यतूष्णीमाज्यमुत्पूयस्रुवंसंमृज्याग्निंतूष्णीमलंकृत्यवामजानुपातयित्वाप्राचीनावीतीस्रुवेणजुहुयात्। अग्नयेस्वाहा अग्नयइदंनममेतित्यागः। एवमुत्तरत्र कामायस्वाहा। लोकायस्वाहा। अनुमतयेस्वाहा । इत्यग्नौआज्येनैव । अस्माद्वैत्वमजायथाअयंत्वदधिजायतां । असौस्वर्गायलोकायस्वाहेतिप्रेतस्योरसि । पृषदाज्येनप्रेतस्योरसीत्यन्ये। असावितिपदस्थानेपुंसःस्त्रियावाप्रेतस्यनाममनिर्दिशेत्। स्विष्टकृदादिनास्ति। पात्रसंयोजनंचनास्ति।

१ औपासनाग्निःक्रव्यादनामायमितिविभाव्य । २ अस्मिन्नन्वाहितेऽग्नौइत्यादिचक्षुषीआज्येनेत्यंतंनास्ति । शेषेणस्विष्टकृतमित्याद्यपिनास्ति।

ततःसक्तुपिष्टेनापूपंकृत्वापृषदाज्येनाऽभिघार्यतदवयवापिंडान्प्रेतस्यललाटेमुखेबाहुद्वयेहृदयेचेतिपंचसुस्थलेषुदद्यात् । अग्नेर्वर्मे
तिदमनोग्निस्त्रिष्टुप् । ललाटेमुखेचाऽपूपपिंडदानेवि० । अग्नेर्वर्मपरिगोभिर्व्ययस्वसंप्रोर्णुष्वपीवसामेदसाच । नेत्त्वाधृष्णुर्हरे
साजर्हृषाणोदधृग्विधक्ष्यन्पर्यंखयाते । इतिललाटमुखयोरपूपपिंडंदत्वा । बाहुद्वयेअतिद्रवेतिमंत्रेण । यौतेश्वानावितिमंत्रेण
हृदयेपिंडंदद्यात् । अतिद्रवेतिमंत्रयोर्यमःश्वानौचत्रिष्टुप् । पिंडदानेवि० । अतिद्रवसारमेयौश्वानौचतुरक्षौशबलौसाधुनापथा ।
अथापितॄन्त्सुविदत्राँउपेहियमेनयेसधमादंमदंति ॥ यौतेश्वानौयमरक्षितारौचतुरक्षौपथिरक्षीनृचक्षसौ । ताभ्यामेनंपरिदेहिरा
जन्त्स्वस्तिचास्माअनमीवंचधेहि ॥ पिष्टपिंडदानंकेचित्प्रेतोपासनात्पूर्वंकुर्वंति । अन्येतुनैवकुर्वंति । ततःक्रव्यादमितिदमनो
ग्निस्त्रिष्टुप् । अग्निप्रज्वालनेविनियोगः । क्रव्यादमग्निंप्रहिणोमिदूरंयमराज्ञोगच्छतुरिप्रवाहः । इहैवायमितरोजातवेदादेवेभ्यो
हव्यंवहतुप्रजानन् ॥ अग्निंप्रज्वालयेत् । पुंसःशिरोदेशेस्त्रियाःपाददेशेइत्यप्याहुः । ततः वातास्तेवांतुपथिपुण्यगंधामनःसुखा
गात्रसुखानुलोमाः । त्वचःसुखामांससुखाअस्थिसौख्यावहंतुत्वांमरुतःसुकृतांयत्रलोकाः । इमाआपोमधुमत्योऽस्मिंस्तेलोकउपदु
ह्यंतामक्षीयमाणाःस्वधानमः । इमाआपोमधुमत्योंऽतरिक्षेतेलोकउपदुह्यन्तामक्षीयमाणाःस्वधानमः । इमाआपोमधुमत्यः
स्वर्गेतेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः । इतिमंत्रैर्वस्त्रपल्लवेनचितौवायुःकार्यइतिकेचित् । ततोदह्यमानंप्रेतमनुमंत्रयी
ततस्तैर्मंत्रैः । प्रेहिप्रेहीतिद्वयोर्यमःपितरस्त्रिष्टुप् । दह्यमानप्रेतानुमंत्रणेवि० । प्रेहिप्रेहिपथिभिःपूर्व्येभिर्यत्रानःपूर्वेपितरः
परेयुः । उभाराजानास्वधयामदंतायमंपश्यासिवरुणंचदेवं ॥ संगच्छस्वपितृभिःसंयमेनेष्टापूर्तेनपरमेव्योमन् । हित्वाया

वयंपुत्ररस्तमेहिसंगच्छस्वतन्वासुवर्चाः ॥ अतिद्रवेतिद्वयोर्यमःश्वानौत्रिष्टुप् । विनियोगःप्राग्वत् । अतिद्रवसारमेयौ श्वानौ०ऋक् ॥ १ ॥ यौतेश्वानौयमरक्षितारौ०ऋक् १ । मैनमितिषण्णांदमनोग्निस्त्रिष्टुप् । विनियोगःप्राग्वत् । मैनमग्नेविदहोमाभिशोचोमास्यत्वचंचिक्षिपोमाशरीरं । यदाशृतंकृणवोजातवेदोथेमेनंप्रहिणुतात्पितृभ्यः ॥ शृतंयदाकरसिजातवेदोथेमेनंपरिदत्तात्पितृभ्यः । यदागच्छात्यसुनीतिमेतामथादेवानांवशनीर्भवाति ॥ सूर्यंचक्षुर्गच्छतुवातमात्माद्यांचगच्छपृथिवींचधर्मणा । अपोवागच्छयदितत्रतेहितमोषधीषुप्रतितिष्ठाशरीरैः ॥ अजोभागस्तपसातंतपस्वतंतेशोचिस्तपतुतंतेअर्चिः । यास्तेशिवास्तन्वोजातवेदस्ताभिर्वहैनंसुकृतामुलोकं ॥ अवसृजपुनरग्नेपितृभ्योयस्तआहुतश्चरतिस्वधाभिः । आयुर्वसानउपवेतुशेषःसंगच्छतांतन्वाजातवेदः । यत्तेकृष्णःशकुनआतुतोदपिपीलःसर्पउतवाश्वापदः । अग्निष्टद्विश्वादगदंकृणोतुसोमश्चयोब्राह्मणाँआविवेश ॥ पूषात्वेतइतिचतसृणांदेवश्रवाःपूषात्रिष्टुप् । विनियोगःप्राग्वत् । पूषात्वेतश्च्यावयतुप्रविद्वाननष्टपशुर्भुवनस्यगोपाः । सत्वैतेभ्यःपरिददत्पितृभ्योग्निर्देवेभ्यःसुविदत्रियेभ्यः ॥ आयुर्विश्वायुःपरिपासतित्वापूषात्वापातुप्रपथेपुरस्तात् । यत्रासतेसुकृतोयत्रतेययुस्तत्रत्वादेवःसवितादधातु ॥ पूषेमाआशाअनुवेदसर्वाःसोअस्माँअभयतमेननेषत् । स्वस्तिदाआघृणिःसर्ववीरोप्रयुच्छन्पुरएतुप्रजानन् ॥ प्रपथेपथामजनिष्टपूषाप्रपथेदिवःप्रपथेपृथिव्याः । उभेअभिप्रियतमेसधस्थेआचपराचचरतिप्रजानन् ॥ उपसर्पेतिचतसृणांसंकुसुकःपितरस्त्रिष्टुप् । उपसर्प० ॥ उच्छ्वंचस्वपृथिविमानिबाधथाःसूपायनास्मैभवसूपवंचना । मातापुत्रंयथासिचाभ्येनंभूमऊर्णुहि ॥ उच्छ्वंचमानापृथिवीसुतिष्ठतुसहस्रंमितउपहिश्रयंतां । तेगृहासो

घृतश्चुतोभवंतुविश्वाहास्मैशरणाःसंत्वत्र ॥ उत्तेस्तभ्नामिपृथिवींत्वत्परीमंलोकंनिदधन्मोअहंरिषं । एतांस्थूणांपितरोधारयंतुतेत्रायमःसादनातेमिनोतु ॥ सोमएकेभ्यइतिपंचानांयमोभाववृत्तमनुष्टुप् । विनियोगःप्राग्वत् । सोमएकेभ्यःपवतेघृतमेकउपासते । येभ्योमधुप्रधावतितांश्चिदेवापिगच्छतात् ॥ तपसायेअनाधृष्यास्तपसायेस्वर्ययुः । तपोयेचक्रिरेमहस्तांश्चि० ॥ येयुध्यंतेप्रधनेषुशूरासोयेतनूत्यजः । येवासहस्रदक्षिणास्तांश्चि० ॥ येचित्पूर्वऋतसापऋतावानऋतावृधः । पितॄन्तपस्वतोयमतांश्चि० ॥ सहस्रणीथाःकवयोयेगोपायंतिसूर्यं । ऋषीन्तपस्वतोयमतपोजाँअपिगच्छतात् ॥ उरूणसावित्यस्ययमःश्वानौत्रिष्टुप् । विनियोगःप्राग्वत् । उरूणसावसुतृपाउदुंबलौयमस्यदूतौचरतोजनाँअनु । तावस्मभ्यंदृशयेसूर्यायपुनर्दातामसुमद्येहभद्रं ॥ एतान्मंत्रान्जपन्दह्यमानप्रेतोपरितिलान्क्षिपेत् । ततःकुंभंसव्येसेगृहीत्वास्फुटितश्लक्ष्णाश्मनापृष्ठभागेच्छिद्रंकृत्वाप्रेतपाददेशादप्रदक्षिणंत्रिःपरिव्रजन्जपेत् । वातास्तेवांतुपथिपुण्यगंधामनःसुखागात्रसुखानुलोमाः । त्वचःसुखामांससुखाअस्थिसौख्यावहंतुत्वांमरुतःसुकृतांयत्रलोकाः । इमाआपोमधुमत्योस्मिंस्तेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः । इत्येकवारंपरिक्रम्यपाददेशएवस्थित्वाअश्मनाकलशेद्वितीयंच्छिद्रंकृत्वापरिव्रजन्जपेत् । वातास्तेवान्तुप० । इमाआपोमधुमत्योंतरिक्षेतेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः । पुनस्तथैवतृतीयंच्छिद्रंकृत्वापरिव्रजन्जपेत् । वातास्ते० इमाआपोमधुमत्यःस्वर्गेतेलोकउपदुह्यंतामक्षीयमाणाःस्वधानमः । परिक्रमणंचसर्वेषांसगोत्राणां । एतैस्त्रिरप्रदक्षिणीकृत्यप्रेतशिरोदेशेकुंभंस्फोटयित्वापृष्ठतोनवेक्षमाणाःसव्यमावृत्त्यकनिष्ठपूर्वकानि

१ जलपूर्णं । २ पाददेशपर्यंतम् ।

शब्दाद्याजनादौ । गर्भाधानंपुंसवनंसीमंतोबलिरेवच । बलिर्विष्णुबलिः । जातकृत्यंनामकर्मनिष्क्रमोऽन्नाशनंपरम् ॥ चौलकर्मो पनयनंतद्व्रतानांचतुष्टयम् । तच्छब्देनप्रसिद्धत्वाद्वेदग्रहणम् । तद्व्रतानांवेदव्रतानामित्यर्थः ॥ स्नानोद्वाहौचाग्रयणमष्टकाच यथातथम् ॥ श्रावण्यामाश्वयुज्यांचमार्गशीर्ष्यांचपार्वणम् । उत्सर्गश्चाप्युपाकर्ममहायज्ञाश्चनित्यशः ॥ संस्कारानियताह्येतेब्रा ह्मणस्यविशेषतइति । श्रावण्यांश्रवणाकर्मादीत्यादिपूर्ववद्व्याख्येयम् । नियतानित्याः । एतेषांपंचविंशतीनांनैमित्तिकवार्षिक मासिकनित्यभेदेनचातुर्विध्यमाहाश्वलायनः—नैमित्तिकाःषोडशोक्ताःसमुद्वाहावसानकाः । सप्तैवाग्रयणाद्याश्चसंस्कारावार्षि कामताः ॥ मासिकंपार्वणंप्रोक्तमष्टकानांतुवार्षिकम् । महायज्ञास्तुनित्याःस्युःसंध्यावच्चाग्निहोत्रवत् ॥ इति । अत्रगर्भाधानाद्या उपनयनांताएवसर्वेषांनियताःनतुस्नानाद्याः । तेनब्रह्मचर्यादेवप्रव्रजेदितिनविरुध्यते । एतेचद्विजानामेवसमंत्रकाः । यदाह याज्ञवल्क्यः—ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयोद्विजाः । निषेकाद्याःश्मशानांतास्तेषांवैमंत्रतःक्रियाइति । वैएवार्थः । अत्रतेषामेवमंत्रतःक्रियाइतिवदन्शूद्रस्यामंत्रकाःक्रियाइतिसूचयति । अतएवसंस्कारानधिकृत्ययमः—शूद्रोप्येवंविधःकार्यो विनामंत्रेणसंस्कृतइति । इतिसंस्काराः ॥ ॥ अथस्वस्तिवाचनम् ॥ तच्चत्रकर्तव्यंतदुच्यते । व्यासः—संपूज्यगंध माल्याद्यैर्ब्राह्मणान्स्वस्तिवाचयेत् । धर्मकर्मणिमांगल्येसंग्रामेऽद्भुतदर्शने ॥ गृह्यपरिशिष्टे—अथस्वस्तिवाचनमृद्धिपूर्तेषु ।

१ यमः—पुण्याहवाचनंदैवेब्राह्मणस्यविधीयते । एतदेवनिरोंकारंकुर्यात्क्षत्रियवैश्ययोः ॥ कश्यपः—लोकेभूतिकर्मसुतदादीन्येववाक्यानि स्युर्यथापुण्याहं सुसमृद्धमिति । भूतिकर्मसुसंपत्करकर्मसु स्वस्तिवाचनमितियावदितिहेमाद्रिः ।

र्गच्छेयुः । इमेजीवाइतिसंकुसुकोमृत्युस्त्रिष्टुप् । सव्यमावृत्त्यगमनेवि० । इमेजीवाविमृतैरावंवृत्रन्नभूद्भद्रादेवहूतिर्नोअद्य । प्रांचो अगामनृतयेहसायद्राघीयआयुःप्रतरंदधानाः ॥ अयंमंत्रःकर्तुरेव । जयंतमतेसर्वेषां । ततोयत्रवहदुदकंभवतितत्रगत्वाएकवाससोदक्षिणामुखामुक्तकेशाःकपालमोक्षानंतरंसर्वेसगोत्रिणोवृद्धपूर्वकाःसपिंडाःसोदकाश्चसकृन्निमज्याचम्योत्तीर्येयेनाश्मनाकुंभछिद्राणिकृतानितंतीरेनिधायतस्योपरिसतिलतोयांजलिंदक्षिणहस्तपितृतीर्थेनसव्योत्तरपाणिनादद्युरपसव्येन । अमुकगोत्रामुकशर्मन्प्रेतैतत्तेतिलोदकमुपतिष्ठतामित्येकैकांजलिर्देयः । सगोत्राःस्त्रियोपिदद्युरेकदा । अयुग्मादद्युः । ब्रह्मचारीनदद्यात् । मातापितृगुर्वाचार्यमातामहमातामहीभ्यःसोपिदद्यात् । शववाहकैश्चदेयं । अन्येसुहृदोपिदद्युः । नवा । दानेपिनाश्मनियमः । पतितव्रात्यादयोनदद्युः । क्षत्रियायोदङ्मुखाः । शूद्रब्राह्मणयोर्दक्षिणामुखादद्युः । ततोदाहजनिततृषोपशमनार्थमिदंतेवासोदकमुपतिष्ठतामितिकर्ताश्मनिउत्तरीयोदकंदद्यात् । ततःसर्वेअन्यानिवासांसिपरिधायार्द्राणिअधोदशानिसकृदेवनिष्पीड्यशोषणार्थमुदग्दशानिनिक्षिप्यासीरन् । दिनदाहेआतारकोदयात् । रात्रिदाहेआसूर्योदयात् । शवस्पर्शिनामप्येवं । कर्ताआर्द्रवस्त्रः । अद्येत्याद्युक्त्वापसव्यंकृत्वाअमुकगोत्रस्यामुकशर्मणःप्रेतस्यप्रेतत्वविमुक्त्योत्तमलोकप्राप्त्यर्थंप्रथमदिनविधिंकरिष्येइतिसंकल्प्य । ताम्रादिमयेनवेभांडेपिंडार्थंहविःश्रपयित्वा । अमुकगोत्रस्यामुकशर्मणःप्रेतस्यदाहजनिततापोपशमनार्थंमृत्तिकास्नानंकरिष्यइतिसंकल्प्य । उदुत्यमितिमृदंगृहीत्वासूर्यायदर्शयित्वासहस्रशीर्षेतिशिरसिलिंपेत् । अंगादंगादितिसर्वांगे । ततोमज्जनं । एवमाद्येहनित्रि

१ सव्यहस्तःउत्तरःउपरिस्थःयस्मिन्ससव्योत्तरपाणिःतेन ।

वारंमृत्तिकास्नानं । ततःआचम्यामुकगोत्रस्यामुकशर्मणःप्रेतस्यदाहजनिततापोपशमनार्थंतिलतोयांजलिदानंकरिष्यइतिसंकल्प्य कुशेष्वश्मानंस्थापयित्वातस्योपरिअमुकगोत्रामुकशर्मन्प्रेतदाहजनिततापोपशमनार्थंएषतेतिलतोयांजलिरुपतिष्ठतामितिदक्षिणामुखोदद्यात् । एवंदशाहांतमहरहरेकैकमंजलिंवर्द्धयेत् । एवंपंचाशदंजलयोभवंति । द्वयोत्तरवृद्ध्यावादद्यात् । प्रत्यहंदशदशवादद्यात् । एवंशतंभवंति । प्रत्यहंत्रयंत्रयंवा । एवंत्रिंशत् । प्रत्यहमेकैकंवा । एवंदशभवंति । प्रत्यंजलिस्नानंकार्यं । ततोऽमुकगोत्रामुकशर्मन्प्रेतआद्येहनिशिरोवयवनिष्पत्त्यर्थमेषपिंडस्तवोपतिष्ठतामितिकुशोपरिमहांतंहविःपिंडं दक्षिणाभिमुखःप्राचीनावीतीदद्यात् । ततःअमुकेत्यादिपिंडस्योपरिएतत्तिलोदकमुपतिष्ठतामितितिलोदकंपितृतीर्थेनदद्यात् । एतत्पिंडोपरिभृंगराजपत्रंतुलसीदलंचोपतिष्ठतामिति( भृंगराजपत्रंतुलसीदलंच )दत्त्वा । अनादिनिधनोदेवःशंखचक्रगदाधरः । अक्षय्यःपुंडरीकाक्षः प्रेतमोक्षप्रदोभव । इतिपठेत् । आचार्यःअभिरम्यतां । अभिरताःस्मः । इदंपिंडदानंसतिलोदकंप्रेताप्यायनमस्त्वितिब्रूयात्[2] । पिंडमुदकेप्रक्षिप्यस्नात्वाचामेत् ॥ अथनवश्राद्धं । प्रथमेह्नितृतीयेचपंचमेसप्तमेतथा । नवमैकादशेचैवतन्नवश्राद्धमुच्यतइतिवचनात् । नवश्राद्धेषुमंत्राभावः । आचम्यप्राणानायम्यतिथ्यादिस्मृत्वाअमुकेत्यादिप्रेतस्येत्यंतमुक्त्वाप्रेतत्वमोक्षार्थमाद्येहनिनवश्राद्धंकरिष्यइतिसंकल्पयेत् । ततःअमुकगोत्रेत्यादिप्रेतेतिसंबुद्ध्यंतमुक्त्वाअयंतेक्षणउपतिष्ठतामितिक्षणंदत्वातथैवपाद्यंचदत्त्वा अमुकेत्यादिपष्ठ्यंतमुक्त्वानवश्राद्धेइदमासनमुपतिष्ठतामित्यासनं । ततोदक्षिणाग्रमेकंकुशंधृत्वातत्रैकमर्घ्यपात्रमासाद्यतत्रैकंप

---

१ चरुपिंडंतिलसर्पिर्मधुशर्करापयोमिश्रितम् । २ अस्तुप्रेताप्यायनमिति आचार्यःप्रतिवदेत् ।

वित्रंजलंतिलांश्चक्षिपेत् । अमुकेत्यादिसंबुद्ध्यंतमुक्त्वानवश्राद्धेइदमर्घ्यंतवोपतिष्ठतामित्यर्घ्यंदत्त्वा । तथैवप्रत्यक्षंदास्यमानंवा च्छादनंदद्यात् । ततोघृताक्तमन्नमादायामुकगोत्रायामुकशर्मणेप्रेतायस्वाहेत्येकामाहुतिंविप्रपाणौजुहुयात् । इदमग्नौकरणंकेचिन्ने च्छंति । ततःसोपस्करमामंद्विजाग्रेकुशंवटोर्वाग्रेनिधाय विष्णोआमंरक्षस्वेतिसंस्पृश्यतूष्णींपात्रमालभ्यामुकगोत्रायेत्यंतमुक्त्वाइद मामंदास्यमानंवायथाशक्तिसोपस्करंसोदकुंभंसदक्षिणमुपतिष्ठतामितिसकुशंतिलोदकंदद्यात् । ततोनामगोत्रादिचतुर्थ्यंतमुक्त्वा आद्येहनिविषमश्राद्धेअयंसक्तुपिंडउपतिष्ठतामितिपिंडंदत्वातिलोदकंभृंगराजंचपूर्ववद्दत्वाअनादिनिधनइतिश्लोकंपठित्वाअभिर म्यतामित्युक्तेअभिरताःस्मेतिप्रत्युक्तःपिंडंप्रवाह्यस्नायात् ॥ ततःआचम्यप्राणानायम्यदेशकालस्मरणादिकृत्वाअमुकस्येत्याद्यु क्त्वाप्रेतत्वनिवृत्तिकामःप्रथमदिनविहितंनग्नप्रच्छादनश्राद्धंकरिष्यइतिसंकल्प्य । क्षणपाद्यासनाच्छादनानिपूर्ववद्दत्वाअग्नौप्रेता यस्वाहेतिएकामाहुतिमग्नौकरणंकृत्वानवाअमुकेत्यादिचतुर्थ्यंतमुक्त्वाप्रेतत्वनिवृत्तयेनग्नप्रच्छादनश्राद्धेइदंदास्यमानंवामान्नंयथा शक्तिसोपस्करंसघृतंसोदकुंभंसवस्त्रंसकांस्यंयथाशक्तिसुवर्णरजतलोहतैलदक्षिणोपेतंसोपानत्कंसोदपात्रमुपतिष्ठतामितिपूर्ववत्संक ल्प्यपूर्ववद्दर्भशिखोपरिनग्नप्रच्छादनश्राद्धेअयंपिंडउपतिष्ठतांतिलोदकंभृंगराजादिअनादिनिधनादिस्नानांतंपूर्ववत् ॥ ततःअमु केत्यादिप्रेतस्येत्यंतंषष्ठ्यंतमुक्त्वामनुष्यलोकात्प्रेतलोकगमनार्थंपाथेयश्राद्धंकरिष्यइतिसंकल्प्यक्षणपाद्यासनार्घ्याच्छादनाग्नौकर

---

१ कुशबटुःमहाराष्ट्रभाषायां'चट'इतिप्रसिद्धः । २ प्रवाहणंनामयस्मिन्स्थलेपिंडदानंकृतं तत्स्थानादन्यत्रनिनयनं । नवश्राद्धेअभ्यंजनां जनेअपिदेये ।

णामाश्मपिंडतिलोदकभृंगराजश्लोकपाठादिस्नानांतंपूर्ववत् । सर्वत्रामश्राद्धेआमंशक्त्यादशगुणमष्टगुणंपंचगुणंचतुर्गुणंद्विगुणं
वादद्यात् । अस्थिसंचयनानंतरंपाथेयश्राद्धमितिस्मृत्यर्थसारे । ततःसर्वेशुष्कवस्त्राणिधारयेयुः कर्तातुत्रिगुणमधोदशंपरिधानीयं
वासोनिष्पीड्योदगग्रंशोषणायक्षिपेत् । ततःशुष्कंपरिदध्यात् । ततोदृष्टेषुनक्षत्रेषुउदितेसूर्येवाबालपुरःसराःवृद्धजघन्याःगृहंगत्वा
द्वारदेशेनिंबपत्राणिविदश्यथूत्कृत्याचम्य पाषाणाग्निगोमयाक्षततैलोदकदूर्वावृषभसर्षपान्यथालाभंस्पृष्ट्वा देहल्यांचरणंदत्वावि
शेयुः । शववाहकानामपिनिंबपत्रदशनादिएकाहंचाशौचं । तद्गृहवासिनांत्र्यहं तदन्नभुक्तौतद्गृहवासेचदशाहं । निंबपत्रभक्षणं
भोजनस्थापनंचकृताकृतमितिस्मृत्यर्थसारे । ततःयष्ट्यादिलंबितयोःशिक्ययोर्नवमृद्भाजनद्वयेजलंदुग्धंचनिक्षिप्य प्रेतात्रस्नाहि
इदंचपिबेतिवदेत् । तस्मिन्दिनेगेहेपाकोनविधेयः । क्रीतंसुहृद्भ्योलब्धंवाश्नीयुः । गोत्रजानांतद्दिनेतद्गृहएवभोजनं । आमिषलवणं
पयोमृष्टान्नपायसादि नाऽश्नीयुः । कर्ताभोजनकालेपात्रस्थंकिंचित्सघृतमन्नमादायामुकेत्यादिप्रेतायेत्यंतमुक्त्वाइदमन्नमुपतिष्ठता
मितिभूमौदत्वागृहोपरिप्रक्षिपेत् । भोजनपात्रसमीपेवादद्यात् । एवंदशदिनानिवादद्यात् । दशदिनानिभोजनस्थानविपर्ययोन
कार्यः । हविष्यान्नमेवभुंजीरन् । खेलनहास्यहर्षोच्चासनोत्कृष्टवस्त्रादिधारणतैलाभ्यंगादि स्त्रीसंगखट्वाशयनादीन्यस्पृश्यस्पर्शादीनि
वर्जयेयुः । रात्रौपृथगेवतृणास्तृतभूमौशयीरन् । महागुरुनिपातेत्र्यहमेकाहंचोपवासः । पारणाचक्रीतेनलब्धेनवान्नेन । गुरुपत्न्या
श्चैवं । बालवृद्धातुराणांनैतेनियमाः ॥ अथास्थिसंचयनं ॥ तच्चप्रथमेद्वितीयेतृतीयेचतुर्थेवासप्तमेनवमेवादिवसेकर्तव्यं । कृष्णपक्षे

१ आचम्याग्न्यंबुदूर्वांकुरवरवृषभानक्षतान्गोमयंचस्पृष्ट्वासिद्धार्थतैलान्यथदृषदिपदंन्यस्यसर्वेविशेयुः इतित्रिंशच्छ्लोक्यां ।

दशम्याऊर्ध्वमयुग्मतिथिष्वेकादश्यांत्रयोदश्यांपंचदश्यांवाकृष्णपक्षांतेसपिंडीकरणात्पूर्वंस्मृत्युक्तेकालेफल्गुनीद्वयाषाढोद्वयप्रोष्ठपदाद्वयत्रिर्जन्मपुष्यहस्तनक्षत्रेषुन । ननंदातिथौ । अंगारकार्कमंदवारेषुन । अश्वशांश्वसूकरशूद्रादिस्पर्शेपंचगव्येनशालग्रामतुलस्युदकेनचप्रोक्षणंकुर्यात् । दाहदेशेगत्वाचम्यदेशकालौस्मृत्वाअमुकगोत्रस्येत्यादिअमुकप्रेतस्यप्रेतत्वनिवृत्त्यर्थंअस्थिसंचयनंकरिष्यइतिसंकल्प्य । शमीशाखयासक्षीरोदकेनापसव्यंपरिक्रामन्त्रिःश्मशानदेशंशीतिकइतिप्रोक्षेत् । शीतिकेइत्यस्यदमनोग्निरनुष्टुप् अस्थिप्रोक्षणेवि० । शीतिकेशीतिकावतिह्लादिकेह्लादिकावति । मंडूक्याऽसुसंगमइमंस्व१ग्निंहर्षय । अनेनपादादारभ्यसर्वाचितिंप्रोक्षेत् । ततोवृद्धाविषमाःकर्तृसहिताअंगुष्ठोपकनिष्ठिकाभ्यांगृहीत्वाएकैकमस्थिपादप्रभृतिशिरःपर्यंतंयथाशब्दोनभवतितथानवेकुंभेनिदध्युः । स्त्रियाःकुंभ्यां । स्तनरहितःकुंभः । सस्तनाकुंभी । अन्यच्चस्मशूर्पेणसंशोध्यसूक्ष्मास्थीन्यपिकुंभेनिधायभस्मगंगायांक्षिपेत् । ततोवर्षाकालादन्यकालेयत्रजलंनागच्छेत्ताद्दशेशुद्धेप्रशस्तेदेशेगर्तंकृत्वा । उपसर्पेतिसंकुसुकःपृथिवीमृत्युःपितरोवात्रिष्टुप् । अस्थिकुंभस्यगर्तप्रक्षेपणेविनियोगः । उपसर्पमातरं० ऋक् १ । अनेनमंत्रेणकर्ताघटंगर्तेनिदध्यात् । उच्छ्वंचस्वेतिसंकुसुकोमृत्युःपितरःपृथिवीवाप्रस्तारपंक्तिः । पांसुक्षेपणेवि० । उच्छ्वंचस्वपृथिविमानिबांधथाः० ऋक् १ । अनेनघटस्यसमंतात्खातेमृदंक्षिपेत् । उच्छ्वंचमानेतिसंकुसुकःपृथिवीमृत्युःपितरोवाजगती । अस्थिकुंभसमीपेजपेवि० । उच्छ्वंचमानापृथिवीसुतिष्ठतु० ऋक् १ । इतिमंत्रमंजलिंबध्वाजपेत् । ततःउत्तेस्तभ्नामीतिसंकुसुकःपृथिवीपितरोवामृत्युर्वात्रिष्टुप् कपालेनघटस्यापि

१ जन्ममासजन्मतिथिजन्मनक्षत्राणिनिजन्मशब्दवाच्यानि ।

धानेवि०। उत्तैस्तभ्नामिपृथिवींत्वत्परीमं० ऋक् १। अनेननवखर्परेणघटंपिदध्यात्। ततःयथाकुंभोनदृश्यतेतथामृदंनिधायपश्चाद
नवेक्षमाणोन्यत्रगत्वास्नायात्। ततोगोमयेनश्मशानदेशमुपलिप्य। तत्रत्रिकोणांवेदिंकृत्वाहरिद्रादिनालंकृत्य तत्रोदकपूर्णकुंभंत
स्योपरिमहांतंभक्तपिंडंचस्थापयित्वा। अद्येत्यादिअमुकगोत्रायामुकशर्मणेप्रेतायभोजनार्थमयंपिंडःपानार्थंचेदमुदकुंभोदकमुपति
ष्ठतामितिसकुशतिलंजलंक्षिपेत्। ततस्तत्पश्चिमभागेश्मशानवासिनेरुद्रायायंपिंडउपतिष्ठतामितिरुद्रायपिंडांतरंदद्यात्। श्मशान
वासिभ्यःप्रेतेभ्योऽयंपिंडउपतिष्ठतामित्यु[1]त्तरतःपिंडांतरं। प्रेतसख्येऽयंपिंडउपतिष्ठतामिति[2]पूर्वतोदक्षिणतोवाप्रेतसख्येपिंडांतरं।
ततःक्रमेणतेषामुपरितिलोदकंअमुकेत्यादितिलोदकमुपतिष्ठतामितिदद्यात्। ततःपोलिकात्रयंपादुकापट्कंछत्रत्रयंचसंपाद्यकालायद
हनपतयेमृत्यवेदहनपतयेइदमुपतिष्ठतामिति[3]प्रत्येकंक्रमेणदद्यात्। ततोयमश्वभ्यामिदमुपतिष्ठतामितिपोलिकादिदत्वास्नायात्।
ततोऽमुकस्येत्यादिप्रेतत्वविमोक्षार्थअस्थिसंचयनश्राद्धंकरिष्यइतिसंकल्प्यमंडलंकृत्वातत्रदक्षिणाग्रदर्भशिखायांक्षणपाद्यासनार्घ्य
भृंगराजाच्छादनानिअमुकप्रेतायेदमुपतिष्ठतामितिदत्त्वातूष्णीमर्चनं। अग्नौकरणंप्रेतायेदमुपतिष्ठतामिति। ततःअमुकेत्यादिप्रे
तांतंचतुर्थ्यंतमुक्त्वाइदंदास्यमानंवाऽऽमंसोदकुंभंसदक्षिणमुपतिष्ठतामिति। ततोदर्भशिखायांअमुकप्रेतायास्थिसंचयनश्राद्धेऽयं
पिंडउपतिष्ठतामितिपिंडंदत्त्वातथैवतिलोदकंभृंगराजंच। अनादिनिधनइत्युक्त्वापिंडप्रवाहणंकृत्वास्नायात्। अस्थिसंचयनानं
तरंसपिंडानांशय्यासनादौनदोषः। अधिकारिवर्जइतिढोंढूपद्धतौ॥ अथद्वितीयदिनकृत्यं॥ पूर्वदिनकृत्यदेशंगत्वाअमुकगोत्रस्ये

१ रुद्रपिंडादुत्तरतइत्यर्थः। २ प्रेतपिंडस्यपूर्वतोदक्षिणतोवा। ३ प्रत्येकंपोलिकांपादुकाद्वयंछत्रंचदत्त्वा।

त्यादिप्रेतस्येत्यंतमुक्त्वाप्रेतत्वविमुक्त्योत्तमलोकप्राप्तयेद्वितीयदिनविधिंकरिष्यइतिसंकल्प्यपूर्ववन्मृत्तिकास्नानंकृत्वापूर्ववत्संक-ल्प्यअश्मोपरितिलतोयांजलित्रयंद्वयंदशकंवादद्यात्। हविःश्रपयित्वाअद्येत्याद्युक्त्वामुकप्रेतस्यचक्षुःश्रोत्रनासावयवनिष्पत्त्यर्थंअयंपिंडउपतिष्ठतामितिदर्भशिखोपरिपिंडंदत्वातिलोदकभृंगराजतुलसीदलदानंपूर्ववत्। अनादिनिधनो०। पिंडंप्रवाह्यस्नानं। एवंसर्वदिनेषु ॥ अथतृतीयदिनकृत्यं॥ पूर्ववत्तृतीयदिनविधिंकरिष्यइतिसंकल्प्य। अश्मनउपरितिलांजलयःपंचत्रयःदशवा। स्नात्वाअमुकप्रेतस्यभुजवक्षोग्रीवामुखावयवनिष्पत्त्यर्थमयंपिंडउपतिष्ठतामितिअन्नपिंडंदत्त्वातिलोदकादिपिंडप्रवाहणांतंपूर्ववत्स्नानंच। अद्येत्यादिअमुकप्रेतस्यतृतीयदिनेविषमश्राद्धंआद्यदिनवत्कुर्यात्स्नानंच ॥ अथचतुर्थदिनकृत्यं॥ संकल्पादिपूर्ववत्। अंजलयःषट्त्रयश्चत्वारोदशवा। स्नानंपूर्ववत्। अद्येत्याद्युक्त्वामुकप्रेतस्यपार्ष्णिकुक्षिकटिनाभिगुदलिंगावयवनिष्पत्त्यर्थमयंपिंडउपतिष्ठतामितिपिंडदानं। तिलोदकादिपिंडप्रवाहणस्नानांतंपूर्ववत् ॥ अथपंचमदिनकृत्यं ॥ संकल्पादि० । अंजलयोनवत्रयःपंचदशवास्नानं ॥ अद्येत्यादिअमुकप्रेतस्योरुजानुजंघावयवनिष्पत्त्यर्थमयंपिंडउपतिष्ठतामितिपिंडदानं । तिलोदकादिपिंडप्रवाहणांतंपूर्ववत्स्नानंच । अद्येत्यादिअमुकप्रेतस्यविषमश्राद्धेक्षणादिपिंडप्रवाहणांतंप्राग्वत्स्नानंच ॥ अथषष्ठदिनकृत्यं ॥ संकल्पादि० अंजलयःएकादशत्रयःषड्दशवास्नानं । अद्येत्यादिअमुकप्रेतस्यगुल्फपादांगुलीमर्माद्यवयवनिष्पत्त्यर्थंअयंपिंडउपतिष्ठतामितितिलोदकादिस्नानांतंप्राग्वत् ॥ अथसप्तमदिनकृत्यं । संकल्पादि० अंजलयस्त्रयोदशत्रयःसप्तदशवा। स्नानं । अद्येत्यादि० अमुकप्रेतस्यास्थिमज्जाशिरोवयवनिष्पत्त्यर्थमयंपिंडउपतिष्ठतामितिपिंडदानंतिलोदकादिपिंडप्रवाहणांतंप्राग्वत्स्नानं। अद्येत्यादि

अमुकप्रेतस्यविषमश्राद्धंकरिष्यइतिसंकल्प्यक्षणादिस्नानांतंप्राग्वत् ॥ अथाष्टमदिनकृत्यं । संकल्पादिअंजलयःपंचदशत्रयोष्टौदश वा । स्नानं । अद्येत्यादि०नखदंतलोमाद्यवयवनिष्पत्त्यर्थमयंपिंडउपतिष्ठतामितिपिंडदानंतिलोदकादिपिंडप्रवाहणांतंस्नानं ॥ अथनवमदिनकृत्यं ॥ संकल्पादि०अंजलयः । सप्तदशत्रयोनवदशवा । स्नानं । अद्येत्यादिमर्मवीर्यादिसर्वावयवसंपत्त्यैअयं पिंडउपतिष्ठतामितिपिंडदानं । तिलोदकादिपिंडप्रवाहणांतंस्नानं । अद्येत्यादिसंकल्प्यक्षणादिस्नानांतंविषमश्राद्धंपूर्ववत् ॥ अथदशमदिनकृत्यं ॥ पूर्वदिनस्थलेगत्वासंकल्पादि० । तिलांजलयःएकोनविंशतिःत्रयःदशवास्नानं । चरुंश्रपयित्वा । अद्ये त्यादिसंकल्प्यामुकप्रेतस्यक्षुत्पिपासानिवृत्त्यर्थमयंपिंडउपतिष्ठतामितिपिंडदानं । तिलोदकभृंगराजादिपिंडप्रवाहणांतंपूर्ववत् । ततोमृदात्रिकोणांवेदिंकृत्वागोमयेनसंमृज्यहरिद्रादिनालंकृत्यतत्रकुंभपंच[1]कंजलपूरितंस्थापयेत् । तदुपर्योदनपिंडांश्च । अमुकगो त्रायामुकशर्मणेप्रेतायक्षुत्पिपासानिवृत्त्यर्थमयंपिंडःसोदकुंभउपतिष्ठतामितिमध्यस्थंनिवेदयेत् । प्रेतसखि[2]भ्यइतिपूर्वस्थं । वैव स्वताययमायेतिदक्षिणस्थं । वायसेभ्यइतिपश्चिमस्थं । प्रेताधिपतयेरुद्रायेत्युत्तरतः । केचिच्चतुष्टयमेवाहुः । तत्रदक्षिणेप्रेताय । श्मशानवासिनेरुद्रायपूर्वे । श्मशानवासिभ्यःप्रेतेभ्यउत्तरतः । प्रेतसखिभ्यःपश्चिमतः । अन्येत्रयमाहुः । तत्रमध्येप्रेताय । उत्तरतःप्रेतसखिभ्यः । दक्षिणतोयमाय । केचित्प्रेतस्थानमात्रेसजलकुंभःपिंडः । अन्यैत्र[3]भूमावेवपिंडमात्रमाहुः । पिंडोपरिति

१ प्राच्यादिचतुर्दिक्षुमध्येनेतिपंच । २ प्रेतस्यसखायःइतितत्पुरुषाश्रयणे'राजाहःसखिभ्यष्टच्'इतिटचिप्रेतसखाःइतिस्यात् । परंचैतत्प्रयो- गसिद्ध्यर्थंबहुव्रीह्याश्रयणंकर्तव्यम् । प्रेतःसखायेषामिति । ३ अन्येभ्यइत्यर्थः ।

लोदकंदत्वापादुकाछत्रपताकापोलिकादिप्रत्येकंतेभ्यःउपतिष्ठतामितिदद्यात् । ततःपश्चिमदेशस्थंपिंडंवायसोयावद्भक्षयतितावत्तिष्ठेत् । ततोऽश्मानंतैलेनाभ्यज्यजलेनिक्षिपेत् । केचित्प्रेतत्वविमुक्त्योत्तमलोकप्राप्त्यर्थंपूर्वोक्तानिदशदानान्यप्यत्रकुर्वंति शक्तौसत्यां । ततःकर्त्राप्रार्थिताःसर्वेबांधवाःसंबंधिनश्चत्रींस्त्रीन्धर्मोदकांजलीनेकैकंवाप्रेतोद्देशेनजलतीरेदद्युः । ततःपुत्रादीनां यथाचारंकेशश्मश्रुलोमनखादिवापनं । ततःसर्वेसगोत्रायथादेशाचारंतिलामलकादिस्नानंकृत्वाशुद्धशुष्कवाससोगृहंगत्वासर्वेतत्रैवभुंजीरन्निति ॥ इतिदशाहकृत्यं ॥ अथैकादशेऽहनिकर्तव्यं । तत्रप्रातरुत्थायस्पृष्टानांमृद्भांडानांत्यागः । गृहानुलेपनं । सर्वेषांसपिंडानांसचैलंस्नानं । स्पृष्टसर्ववस्त्रप्रक्षालनं । पूर्वोक्तमार्गेणपंचगव्यंसंपाद्यतस्यप्राशनं । ततःकर्ता वृषोत्सर्गंकुर्यात् । एकादशेऽह्निप्रेतस्ययस्यनोत्सृज्यतेवृषः । प्रेतत्वंसुस्थिरंतस्यदत्तैःश्राद्धशतैरपि । अत्रनाचार्यवरणं काम्यवृषोत्सर्गवत् । किंतुस्वयमेवकुर्यात्सर्वं । देशकालौस्मृत्वाअमुकगोत्रस्यामुकशर्मणःप्रेतस्यप्रेतत्वविमुक्त्योत्तमलोकप्राप्त्यर्थंवृषोत्सर्गंकरिष्ये । तदंगमग्निप्रतिष्ठापनादिकरिष्यइतिसंकल्प्याग्निंप्रतिष्ठाप्यअन्वाधानंकुर्यात् । अस्मिन्नन्वाहितेग्नावित्याद्याज्यभागांतमुक्त्वाअत्रप्रधानं रुद्रंचरुणा । सोमंपायसेन । इंद्रंयावकेन । शेषेणस्विष्टकृतमित्यादिपरिसमूहनादिपूर्णपात्रनिधानांतंविधायनिर्वापादिक्रमेणहविस्त्रयंसंपाद्यजुहुयात् । कद्रुद्रायेतिप्रस्कण्वोरुद्रोगायत्री रौद्रचरुहोमेवि० कद्रुद्रायप्रचेतसे०हृदेस्वाहा । रुद्रायेदं० सोमोधेनुंगौतमःसोमस्त्रिष्टुप् । सौम्यपायसहोमेवि० । सोमोधेनुंसोमोअर्वंतमाशुंसोमोवीरंकर्मण्यंददाति । सादन्यंविदथ्यंसभेयंपितृश्रवणं

---

१ वायसपिंडम । २ भर्जितयवपिष्टेजलंसंमिश्र्यअग्नौपाचितं यावकमुच्यते ।

योददांनादस्मैस्वाहा । सोमायेदं० इंद्रंवोमधुच्छंदाइंद्रोगायत्री । ऐंद्रयावकहोमेवि० इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः । अस्माकमस्तुकेवलःस्वाहा । इंद्रायेदं० । एभिर्मंत्रैर्यथाक्रमंहुत्वास्विष्टकृदादिमार्जनांतंकुर्यात् । केचिद्रुद्रायस्वाहेत्यादिनानाम मंत्रैरेवहोममाहुः । ततोद्विहायनमेकहायनंवाजीवद्वत्सायाःपयस्विन्याःपुत्रंनीलादिवर्णं । लोहितोयस्तुवर्णेनमुखेपुच्छेचपांडुरः । श्वेतःखुरविषाणाभ्यांसनीलोवृषउच्यतइतिलक्षितंयथालाभंवाआनीय । ततश्चतस्त्रोद्वेएकांवाएकवर्षाधिकांवत्सतरीमानीयगोस हितस्यवृषस्यमंत्रैरभिषेकःकार्यः । आपोहिष्ठेतितृचस्यांबरीषःसिंधुद्वीपआपोगायत्री । वृषवत्सतर्यभिषेकेवि० ॥ आपोहिष्ठामयो भुवः० ऋचः ३ । कयानइतितिसृणांगौतमोवामदेवइंद्रोगायत्री । अभीषुणइतिपादनिचृत् । वृषवत्सतर्यभिषेकेवि० । कयान श्चित्रआभुवदूतीसदावृधःसखा । कयाशचिष्ठयावृता । कस्त्वासत्योमदानांमंहिष्ठोमत्सदंधसः । दृढाचिदारुजेवसु । अभी षुणःसखीनामविताजरितॄणां । शतंभवास्यूतिभिः । वृषंवत्सतरींचवस्त्रगंधाक्षतमाल्यादिभिर्यथाशक्त्यलंकृत्य । ऋषभमिति सूक्तस्यऋषभोऽनुष्टुप् । अंत्यामहापंक्तिः । ऋषभोपस्थानेवि० । ऋषभंमासमानानांसपत्नानांविषासहिं । हंतारंशत्रूणांकृधिवि राजंगोपतिंगवां । अहमस्मिसपत्नहेंद्रइवारिष्टोअक्षतः । अधःसपत्नामेपदोरिमेसर्वेअभिष्ठिताः । अत्रैववोपिनह्याम्युभेआर्त्नीइ वज्यया । वाचस्पतेनिषेधेमान्यथामदधरंवदान् । अभिभूरहमागमंविश्वकर्मेणधाम्ना । आवश्चित्तमावोव्रतमावोहंसमितिंददे । योगक्षेमंवआदायाहंभूयासमुत्तमआवोमूर्धानमक्रमीं । अधस्पदान्मउद्वदतमंडूकाइवोदकान्मंडूकाउदकादिव । ऋषभमिति सूक्तंपंचर्चंकृतांजलिपुटोजपेत् । ततोवृषंमदक्षिणमग्निंपूर्वतआनीयास्यदक्षिणबाहुस्फिचिभस्मनात्रिशूलाकारंवामेचक्राकारमं

ऋद्धिर्विवाहांता अपत्यसंस्काराः, प्रतिष्ठोद्यापनेपूर्तं तत्कर्मणश्चाद्यंतयोःकुर्यादिति । आश्वलायनस्मृतिः—वैदिकेतांत्रिके चादौततःपुण्याहइष्यते ॥ शौनकः—‘पुण्याहवाचनविधिंवक्ष्यामोऽथयथाविधि । प्रयोक्तुःकर्मणामादावंतेचोदयसिद्धयइति । तच्चप्रयोगांतर्गतमितिकेचित् । वहवस्तुप्रयोगाद्बहिर्भूतमिति । आद्यपक्षेकर्मप्रयोगसंकल्पंकृत्वाकार्यम् । द्वितीयेतुतत्कृत्वा कर्मसंकल्पः ॥ ॥ अथस्वस्तिवाचनप्रयोगःप्रयोगपारिजातानुसारेणोच्यते । यजमानःकृताभ्यंगादिःस्वलंकृतोदर्भपाणिः

---

१ नित्यंनैमित्तिकंकाम्यंक्रियांगंमलकर्षणम् । क्रियास्नानंतथाषष्ठंषोढास्नानंप्रकीर्तितमिति । तेनात्रस्नानंवारुणमेवग्राह्यंनतुमंत्रस्नानादिगौणमपि । यद्यपिवारुणस्यषट्भेदाउक्तास्तथाप्यत्रक्रियांगंस्नानंग्राह्यम् । तच्चधर्मक्रियांकर्तुंयत्पूर्वंस्नानंतत्क्रियांगम् । धर्मतत्त्वप्रकाशे—धर्मक्रियांकर्तुकामःपूर्वंस्नानंसमाचरेत् । क्रियांगंतत्समुद्दिष्टंस्नानंवेदपरैर्द्विजैरिति । स्मृतिमुक्तावल्यां—धर्मक्रियांकर्तुकामःस्नानंकर्मांगमाचरेदित्यपि । तच्चतिलामलकादिनाभ्यंगस्नानमितिशिष्टाः । निर्णयसिंधावपि—तिलस्नानंसदापुण्यंकुर्यादामलकैःश्रितमिति । आमलकमिश्रितमित्यर्थः । प्रयोगदीपिकायांतु—शिरःस्नातस्तुकुर्वीतदैवंपित्र्यमथापिवा । प्राङ्मुखोदङ्मुखोवापिश्मश्रुकर्मचकारयेदितिवचनाच्छिरःस्नानश्मश्रुकर्मणीकार्ये । तत्रादौश्मश्रुकर्मततःशिरःस्नानमित्युक्तम् । अभ्यंगस्नानंप्रकृत्यमदनपारिजातेकात्यायनः—मांगल्यंशस्यतेस्नानंवृद्धिपूर्तोत्तरेषुच । स्नेहमंत्रसमायुक्तमभ्याहात्प्राक्तदिष्यतइति । वृद्धिपूर्तोत्सवेषुचेतिसिंधौपाठः । अत्रस्नेहस्तैलम् । नच—सोमवारेतथाभ्यंगंवर्जयेत्तुसदाबुधैरितिप्रचेतादिवाक्येनकर्मांगाभ्यंगस्नानेतिथ्यादिनिषेधोनेतिवाच्यम् । समलापहस्नानएवनिषेधोननित्यनैमित्तिककाम्यबाधकइतिपीयूषधारायांभट्टभास्करोक्तेः । तेननि[illegible]दिनिषेधोभोगार्थस्नानपरः मंगलेष्वभ्यंगेनदोषइतिसिंधुः ।

फयित्वातदुपरितप्तलोहेनांकयेत् । ततःप्रांचमुत्सृजेत् । व्रजंतमनुमंत्रयीत । एतंयुवानंपरिवोददामितेनक्रीळंतीश्चरतप्रियेण । माथःशाप्तजनुषासुभगारायस्पोषेणसमिषामदेमेति ॥ शांतातेपृथिवीशिवमंतरिक्षंद्यौस्तेदेव्यभयंकृणोतु । शिवादिशःप्रदिशउद्दिश स्तआपोविद्युतःपरिपांतुसर्वतःशांतिःशांतिःशांतिः । सर्वतोव्रजस्वेतिब्रूयात् । ऋषभोपस्थानमेतदनंतरंवा । ततोवृषंपूर्वाभि मुखंकृत्वा कद्रुद्रायेतिनवर्चस्यघोरःकण्वोरुद्रोगायत्री पूर्वदिगुपस्थानेवि० । कद्रुद्रायप्रचेतसे० ऋचः ॥ ९ ॥ एतत्सूक्तजपांते गोभिःसहजलंपिबतृणंभक्षयथासुखंक्रीडस्वेतिवदेत् । ततोदक्षिणामुखंकृत्वा । इमारुद्रायेतिसूक्तस्यकुत्सोरुद्रोजगती । अंत्येत्रि ष्टुभौ । दक्षिणदिगुपस्थानेवि० । इमारुद्रायतवसेकपर्दिने०ऋचः ॥ ११ ॥ इतिसूक्तजपांतेगोभिरित्यादिपूर्ववत् । ततःपश्चि माभिमुखंकृत्वा । आतेपितरितिसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् । पश्चिमदिगुपस्थानेवि० । आतेपितर्मरुतांसुम्नमेतुमानःसूर्यस्य संदृशोयुयोथाः । अभिनोवीरोअर्वतिक्षमेतप्रजायेमहिरुद्रप्रजाभिः ॥ त्वादत्तेभीरुद्रशंतमेभिःशतंहिमाअशीयभेषजेभिः । व्य१ स्मद्द्वेषोवितरंव्यंहोव्यमीवाश्चातयस्वाविषूचीः ॥ श्रेष्ठोजातस्यरुद्रश्रियासितवस्तमस्तवसांवज्रबाहो । पर्षिणःपारमंहसःस्वस्ति विश्वाअभीतीरपसोयुयोधि ॥ मात्वारुद्रचुक्रुधामानमोभिर्मादुष्टुतीवृषभमासहूती । उन्नोवीरांअर्पयभेषजेभिर्भिषक्तमंत्वाभि षजांशृणोमि ॥ हवीमभिर्हवतेयोहविर्भिरवस्तोमेभीरुद्रंदिषीय । ऋदूदरःसुहवोमानोअस्यैबभ्रुःसुशिप्रोरीरधन्मनायै ॥ उन्मामम ंदवृषभोमरुत्वान्त्वक्षीयसावयसानाधमानं । घृणीवच्छायामरपाअशीयाविवासेयंरुद्रस्यसुम्नं ॥ क१स्यतेरुद्रमृळयाकुर्हस्तोयोअ स्तिभेषजोजलाषः । अपभर्तारपसोदैव्यस्याभीनुमावृषभचक्षमीथाः ॥ प्रबभ्रवेवृषभायश्वितीचेमहोमहींसुष्टुतिमीरयामि । नम

स्माकंमलीकिनंनमोभिर्गृणीमसित्वेषंरुद्रस्यनाम ॥ स्थिरेभिरंगैःपुरुरूपउग्रोबभ्रुःशुक्रेभिःपिपिशेहिरण्यैः । ईशानादस्यभुवन
स्यभूरेर्नवाउयोषद्रुद्रोदसुर्यं ॥ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं । अर्हन्निदंदयसेविश्वमभ्वंनवाओजीयोरुद्र
त्वदस्ति ॥ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं । मृळाजरित्रेरुद्रस्तवानोन्यंतेअस्मन्निवपंतुसेनाः ॥ कुमारश्चित्पितरं
वंदमानंप्रतिनानामरुद्रोपयंतं । भूरेर्दातारंसत्पतिंगृणीषेस्तुतस्त्वंभेषजारास्यस्मे ॥ यावोभेषजामरुतःशुचीनियाशंतमावृषणोयाम
योभु । यानिमनुरवृणीतापितानस्ताशंचयोश्चरुद्रस्यवश्मि ॥ परिणोहेतीरुद्रस्यवृंज्याःपरित्वेषस्यदुर्मतिर्महीगात् । अवस्थिरामु
घवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृळ ॥ एवाबभ्रोवृषभचेकितानयथादेवनहृणीषेनहंसि । हवनश्रुन्नोरुद्रेहबोधिबृहद्वदेमवि
दथेसुवीराः ॥ इतिसूक्तजपांतेगोभिरित्यादिपूर्ववत् । ततःउदङ्मुखंकृत्वा । इमारुद्रायस्थिरधन्वनइतिचतसृणांवसिष्ठोरुद्रोज
गती अंत्यात्रिष्टुप् । उत्तरदिगुपस्थानेवि० । इमारुद्रायस्थिरधन्वनेगिरःक्षिप्रेषवेदेवायस्वधाम्ने । अषाळ्हायसहमानायवेधसे
तिग्मायुधायभरताशृणोतुनः ॥ सहिक्षयेणक्षम्यस्यजन्मनःसाम्राज्येनदिव्यस्यचेतति । अवन्नवंतीरुपनोदुरश्चरानमीवोरुद्रजासुनो
भव ॥ यातेदिद्युदवसृष्टादिवस्परिक्ष्मयाचरतिपरिसावृणक्तुनः । सहस्रंतेस्वपिवातभेषजामानस्तोकेषुतनयेषुरीरिषः ॥ मानोवधी
रुद्रमापरादामातेभूमप्रसितौहीळितस्य । आनोभजबर्हिषिजीवशंसेयूयंपातस्वस्तिभिःसदानः ॥ इतिजपांतेगोभिरित्यादिपूर्ववत् ।
ततः वृषभपुच्छेमेतस्यनामगोत्राद्युच्चार्यतर्पणंकुर्यादितिकेचित् । एतावत्कृत्वास्विष्टकृदादिहोमशेषसमापनांतंकुर्यात् । ततोरुद्रसो
मेंद्रेभ्यःआमान्नत्रयंसदक्षिणंदद्यात् । ततोवृषोत्सर्गसंपूर्णतासिध्यर्थंतिलानुदकुंभंगांवासोहिरण्यंचयथाशक्तिदक्षिणांदद्यात् । पति

पुत्रवत्याःसुवासिन्यानवृषोत्सर्गः। तत्स्थानेएकापयस्विनीगौर्देया॥ इतिवृषोत्सर्गः॥ ॥ततःअद्येत्यादिपिंडप्रवाहणस्नानांतंनव श्राद्धंप्राकनविषमदिनवत्कुर्यात्। शिवस्वामिमतेनैतत्। पंचैवनवश्राद्धानिपूर्वोक्तानितन्मते। ततो महैकोद्दिष्टं। तस्मि न्नेवाहन्येकंब्राह्मणंनिमंत्र्यतस्यश्मश्रुकर्माभ्यंगादिकारयित्वा। अद्येत्यादिअमुकगोत्रस्यामुकप्रेतस्यप्रेतत्वनिवृत्त्योत्तमलोकप्राप्तये एकादशाहेमहैकोद्दिष्टंकरिष्यइतिसंकल्प्य। क्षणपाद्यासनार्घ्यगंधपुष्पाच्छादनानिदद्यात्। तत्रार्घ्येदक्षिणाग्रकुशोपरिएकमर्घ्य पात्रमासाद्यतत्रैकंपवित्रंजलंचक्षिप्त्वा। तिलोसिसोमदेवत्योगोसवेदेवनिर्मितः। प्रत्नवद्भिःप्रत्तःप्रेतमिमाँल्लोकान्प्रीणयाहिनइति मंत्रेणतूष्णींवातिलान्क्षिप्त्वाअमुकगोत्रेत्यादिसंबुद्ध्याप्रेतांतमुक्त्वामहैकोद्दिष्टेइदमर्घ्यंतवोपतिष्ठतामित्यर्घ्यंदत्त्वा। पात्रेघृताक्तं सिद्धमन्नमादायविप्रपाणौप्रक्षालितेदर्भानास्तीर्यामुकगोत्रायामुकशर्मणेप्रेतायस्वाहेतिहस्तेएकामाहुतिंहुत्वातदन्नमग्नौक्षिपेत्। नवापाणिहोमः। परिवेषणाद्यंगुष्ठनिवेशनांतंकृत्वाअमुकगोत्रायामुकप्रेतायेदमन्नंयथाशक्तिसोपस्करममृतरूपमुपतिष्ठतामिति संकल्प्याऽपोशनादिदद्यात्। दर्भशिखायाममुकगोत्रेत्यादिअमुकप्रेतायायंतेपिंडउपतिष्ठतामितिपिंडंदद्यात्। तिलोदकंभृं गराजपत्रंदक्षिणांचदद्यात्।, प्रेतस्यवस्त्रशयनाभरणानिपादुकाछत्रोदकपात्रवाहनादीनियथाशक्तिदद्यात्। भूयसींदक्षिणांद त्त्वासंतोषयेत्। अभिरम्यतामितिविसर्जनं। अभिरताःस्मेतिप्रतिवचनं। एकोद्दिष्टेएकोविप्रः। दिवैवनिमंत्रणं। एक मर्घ्यपात्रं। धूपदीपौनस्तः। स्वधाशब्दपितृशब्दनमःशब्दानसंति। नाभिश्रवणं। सर्वप्राचीनावीतिनाकार्यं। दैवंनास्ति।

---

१ सर्वममंत्रकंविषमश्राद्धवत्। एकोद्दिष्टमहैकोद्दिष्टमितिपर्यायौ।

शत्रुशर्म्भिःप्रतिकामममंत्तु ॥८॥ एवंद्वात्रिंशदाहुतीर्हुत्वोच्छिष्टपिंडोनदेयः । अग्निसमीपएकःपिंडःपूर्ववद्देयः विसर्जनांतंपूर्ववत्। इत्यग्नौमहैकोद्दिष्टविधिः ॥ ॥ अथरुद्रगणश्राद्धं । तच्चैकादशरुद्रोद्देशेनरुद्ररूपप्रेतोद्देशेनवाकार्यं । रुद्रोद्देशपक्षेसव्येन । तद्रूपप्रेतोद्देशपक्षेऽपसव्येन ॥ तत्रैकादशरुद्रनामानि । वीरभद्रश्चशंभुश्चगिरीशश्चमहायशाः । अजैकपादहिर्बुध्न्यःपिनाकीचापराजितः । भुवनाधीश्वरश्चैवकपालीचविशांपतिः । स्थाणुर्भगश्चभगवान्रुद्राएकादशस्मृताः ॥ यद्वा अजैकपादहिर्बुध्न्यः कपालीरुद्रएवच । वृषाकपिश्चशंभुश्चकपर्दीरैवतस्तथा । हरश्चबहुरूपश्चत्र्यंबकश्चापराजितः ॥ अथप्रयोगः । देशकालौस्मृत्वा अमुकगोत्रस्येत्यादिप्रेतत्वविमुक्त्योत्तमलोकप्राप्त्यर्थंरुद्रगणश्राद्धंकरिष्यइतिसंकल्प्य । क्षणपाद्यासनादिक्रमेणसर्वंकार्यं । शक्तेनैकैकरुद्रनामग्रहणेनैकैकब्राह्मणभोजनंकार्यं । एवंचैकादशब्राह्मणाभवंति । अशक्तेनसर्वोद्देशेनैकएवभोजनीयः । भोजनाभावेएकादशामान्नानिएकंवा । रुद्ररूपप्रेतोद्देशपक्षेअजैकपाद्रूपिणेअमुकप्रेतायेदमासनमित्यादिप्रत्येकंकार्यं । एकब्राह्मणपक्षेतुएकादशनामान्युक्त्वाएतद्रूपिणेऽमुकप्रेतायेत्याद्यूह्यं । भोजनानंतरंदक्षिणाविसर्जनादिकार्यं । अत्रपिंडदानार्घ्याग्नौकरणविकिराणामभावः ॥ ॥ अथवसुगणश्राद्धं । इदंचकृताकृतं । इदमप्यष्टवसूद्देशपक्षेसव्येनतद्रूपप्रेतोद्देशपक्षेत्वपसव्येनकार्यं । शक्तेनाष्टौब्राह्मणाभोजनीयाः । अशक्तेनैकःसर्वोद्देशेन । अन्नाभावेआमान्नदानं अन्यत्सर्वंपूर्ववत् । वसुनामानिच । ध्रुवोऽध्वरश्चसो

---

१ अस्मिन् श्लोके वीरभद्रः १ शंभुः २ गिरीशः ३ अजैकपात् ४ अहिर्बुध्न्यः ५ पिनाकी ६ भुवनाधीश्वरः ७ कपाली ८ स्थाणुः ९ भगः १० भगवान् ११ इत्येतान्येवैकादशरुद्रनामानि । अन्यानिविशेषणानीतिसमाधेयं ।

मश्चआपश्चैवानिलोऽनलः। प्रत्यूपश्चप्रभासश्चवसवोऽष्टौप्रकीर्तिताइति। अत्रापिपिंडाद्यभावः। इत्येकादशाहकृत्यम्॥ ॥ अथ
पोडशश्राद्धानि। तानिच। आद्यमासिक १ ऊनमासिक २ द्वितीयमासिक ३ त्रैपक्षिक ४ तृतीयमासिक ५ चतुर्थमासिक
६ पंचममासिक ७ षष्ठमासिक ८ ऊनषाण्मासिक ९ सप्तममासिक १० अष्टममासिक ११ नवममासिक १२ दशममासिक १३
एकादशमासिक १४ द्वादशमासिक १५ ऊनाब्दिकानि १६ तत्तत्कालेकर्तव्यानिद्वादशेऽह्निसपिंडीकरणाधिकारसिद्ध्यर्थमपकृ
ष्यएकादशेद्वादशेवाह्निकार्याण्येकोद्दिष्टविधिना। यदिमरणादारभ्यद्वादशमासमध्येकश्चिदधिकमासस्तदातन्मासिकंद्विवारं
कार्यंएवंसप्तदशश्राद्धानिभवंति। अथप्रयोगः। तस्मिन्नेवाहनिप्रातःपोडशब्राह्मणान्निमंत्र्यतेषांश्मश्रुकर्माभ्यंगौकारयित्वाकृत
माध्याह्निकःपोडशपाकान्निष्पाद्याशक्तौओदनमात्रभेदंकृत्वाश्राद्धमुपक्रमेत्। अल्पशक्तौआमान्नेनवाकुर्यात्। देशकालौस्मृ
त्वाऽमुकगोत्रस्याऽमुकप्रेतस्यप्रेतत्वनिवृत्त्योत्तमलोकप्राप्त्यर्थंआद्यमासिकमित्यादिऊनाब्दिकांतमुक्त्वाएतानिपोडशश्राद्धानिस्व
स्वकालेकर्तव्यानिद्वादशाहेसपिंडीकरणाधिकारसिद्ध्यर्थमपकृष्यैकादशेद्वादशेवाह्निअन्नेनामान्नेनवाएकोद्दिष्टविधिनातंत्रेणकरि
ष्यइतिसंकल्प्य। अमुकप्रेतस्याद्यमासिकेक्षणःक्रियतां। एवंद्वितीयमासिकइत्यादिपोडशस्थानेपुक्षणंदत्त्वा। अमुकगोत्रामुक
प्रेताद्यमासिकेद्वितीयमासिकइत्यादिइदंतेपाद्यमुपतिष्ठतामित्येवंपोडशब्राह्मणेपुपाद्यंदद्यात्। एवमासनार्घ्यगंधपुष्पाच्छादनानि
प्रत्येकंपोडशभ्योदद्यात्। अर्घ्येतिलावापेतिलोसीतिमंत्रेणमहैकोद्दिष्टवदूहः। एकैकमर्घ्यंप्रत्येकं। पोडशपात्रेपुघृताक्तमन्नं

१ मासिकंमासादौक्रियमाणं। नतु ऊनमासिकानित्रैपक्षिकंचेत्यर्थः। तानिनमासादौक्रियंते।

प्रत्येकमादायमहैकोद्दिष्टवदमुकशर्मणेप्रेतायस्वाहेतिएकैकामाहुतिंतत्तदन्नेनकरेहुत्वाहुतमन्नमग्नौप्रक्षिप्य । तत्तदाहुत्यर्थमन्नंय तोगृहीतंतत्तदन्नंतत्रतत्रपरिवेष्यांगुष्ठनिवेशनांतंकृत्वा अमुकप्रेतायाद्यमासिकश्राद्धेइदमन्नंयथाशक्तिसोपस्करंसोदकुंभममृतरूप मुपतिष्ठतामितिसंकल्पयेत् । एवंद्वितीयमासिकादौ । भुक्तवत्सुद्विजेषुतत्तदन्नंषोडशसुपात्रेषुगृहीत्वातत्तत्कराहुतिशिष्टमन्नंतत्र तत्रप्रक्षिप्यतत्तद्विप्रसमीपेदर्भेशिखायाममुकगोत्रायामुकप्रेतायाद्यमासिकादावयंतेपिंडउपतिष्ठतामितिषोडशपिंडान्दद्यात् । आमपक्षेआमान्नस्यसंकल्पः । सक्तुपिष्टेनचापिंडदानं । पिंडोपरितिलोदकंभृंगराजपत्रादिमहैकोद्दिष्टवत् ।अंजनादिकंसर्वंप्राकृतं । यथाशक्तिदक्षिणांदत्त्वाऽभिरम्यतामितिविसर्जयेत् । अन्यत्सर्वंविहितनिषिद्धादिमहैकोद्दिष्टवत् । एवंएकदेशकालकर्तृकत्वात्तं त्रेणषोडशश्राद्धानिकुर्यात् । आद्यमासिकंसर्वंसमाप्यद्वितीयादीनिप्रत्येकंपृथगेवसर्वाणिनतुतंत्रेणेतिकेचित् । एतदनंतरमाद्या ब्दिकमप्येकोद्दिष्टविधिनाकार्यं । आद्यमासिकेनतंत्रेणसिद्धेर्नपृथक्कार्यंकिंतुआद्यमासिकंआद्याब्दिकंचतंत्रेणकरिष्यइतिसंकल्प येदितिकेचित्। इत्येकादशाहकृत्यं॥ ॥ अथसपिंडीकरणं॥ तच्चानेककालत्वेपिद्वादशाहएवकार्यं। अनित्यत्वाच्छरीरस्य। आनं त्यात्कुलधर्माणांपुंसांचैवायुषःक्षयात् । अस्थिरत्वाच्छरीरस्यद्वादशाहःप्रशस्यते । तत्रप्रयोगः । पूर्वेद्युर्वैश्वदेवार्थंद्वौविप्रौ । प्रेतस्य पित्रादेर्यैःसहसपिंडीकरणंचिकीर्षितंतत्त्रयार्थंत्रीन्एकंचप्रेतार्थंएवंषड्ब्राह्मणान्निमंत्रयेत् । अत्यशक्तौदैवेत्रय्यांप्रेतेचैकैकमिति त्रीन् । निमंत्रणादिकर्तुस्तेषांचब्रह्मचर्यं । अपरेद्युर्ब्राह्मणानांश्मश्रुकर्माभ्यंगादिकारयित्वाकृतमाध्याह्निकादिर्देशकालौसंकीर्त्यामु

१ अस्मिन्नेवदिनेदशदानानि अष्टदानानि उपदानानि अश्वशय्यादिदानानिचदद्यात् ।

कगोत्रस्यामुकशर्मणःप्रेतस्यप्रेतत्वनिवृत्त्यापितृलोकप्राप्त्यर्थंअमुकगोत्रैरमुकशर्मभिर्वसुरुद्रादित्यरूपैस्तत्पितृपितामहप्रपितामहैः
सहसपिंडीकरणंमृताहाद्द्वादशाहेपार्वणैकोद्दिष्टविधानेनकरिष्यइतिसंकल्पयेत् । मातुःसपिंडीकरणेअमुकगोत्रायाअमुकदायाः
अमुकगोत्राभिर्वसुरुद्रादित्यरूपाभिरस्तत्पितामहीप्रपितामहीवृद्धप्रपितामहीभिरितिविशेषः । एवंभ्रात्रादिसपिंडीकरणेपिज्ञेयं ।
ततःकामकालसंज्ञकविश्वेदेवस्थानेक्षणंदत्वाभवद्भिःप्रसादःकर्तव्यः । प्रेतस्थानेक्षणउपतिष्ठतु । प्रेतस्यपितृपितामहप्रपितामह
स्थानेक्षणंदत्वाभवद्भिःप्रसादःकर्तव्यः इतिक्षणंदत्वामंडलत्रयंकुर्यात् । उत्तरेवैश्वदेवमंडलंचतुष्कोणं । दक्षिणेप्रेतमंडलंत्रि
कोणं । तद्दक्षिणेतत्पितृपितामहादिमंडलंवर्तुलं । कामकालसंज्ञकाविश्वेदेवाःइदंवःपाद्यमितिवैश्वदेवमंडलेसव्येनपार्वणवत्पाद्यं
दत्त्वा । अमुकगोत्रामुकशर्मन्प्रेतेदंपाद्यमितिप्राचीनावीतीमध्यममंडलेप्रेतायपाद्यंदत्त्वा । पार्वणवदमुकगोत्रामुकशर्मन्तत्पितरि
त्यादिक्रमेणदक्षिणमंडलेत्रिभ्यःपाद्यंदद्यात् । कर्तापादौप्रक्षाल्यद्विराचम्योपक्रांतंसपिंडीकरणश्राद्धंकरिष्येइतिसंकल्पयेत् ।
अत्रैववापूर्वोक्तःसकलःसंकल्पःकार्यः । अपहताअसुरारक्षांसीत्याद्युक्त्वाकामकालसंज्ञकानांविश्वेषांदेवानांइदमासनमिति
प्राङ्मुखद्वयायासनंदत्वामंत्रवदर्घ्यासादनावाहनार्घ्यदानगंधपुष्पधूपदीपाच्छादनांतार्चनंप्रकृतिवत् । ततोऽपसव्यं । अमुकगो
त्रायामुकप्रेतायेदमासनमुपतिष्ठतामितिउदङ्मुखायासनंदत्त्वा । अमुकगोत्रायेत्यादितत्पित्रेतत्पितामहायतत्प्रपितामहायेत्या
दिक्रमेणप्रेतपूर्वभागेउदङ्मुखेभ्यस्त्रिभ्यआसनंदद्यात् । तिलान्विकीर्याघ्यार्थमेकंपात्रमासाद्यतत्पूर्वतःपात्रत्रयमासाद्यप्रेतपात्रे
चतुःकुशंकूर्चंनिधायपात्रांतरेषुत्रिकुशंनिधायापआसिच्यप्रेतपात्रेमहैकोद्दिष्टवत्तिलोसीतिमंत्रोहेनतूष्णींवातिलान्क्षिप्त्वापितृपात्रे

पुयथापठितेनतान्क्षिस्वागंधपुष्पाणिसर्वत्रक्षिस्वापितृपात्राणिशन्नोदेवीरित्यनुमंत्र्य । पितृपात्राणिसंपन्नानीत्यादिपृष्टास्वधार्घ्या इतिनिवेदयेत् । ततःप्रेतपात्रस्थमेकंपवित्रंप्रेतस्थानीयब्राह्मणहस्तेदत्त्वातत्पात्रस्थमुदकंकिंचिद्गृहीत्वामुकगोत्रामुकशर्मन्प्रेतेदंते अर्घ्यमुपतिष्ठतामितिअर्घ्यंदत्त्वाअमुकगोत्रामुकप्रेतपात्रोदकंअमुकगोत्राणाममुकशर्मणांप्रेतपितृपितामहप्रपितामहानामर्घ्यपात्रो दकेनसंयोजयिष्येइतिपृष्टे । संयोजयेतिब्राह्मणैरुच्चरितेप्रेतपात्रस्थंकुशत्रयंपितृपात्रत्रयेदत्त्वाप्रेतार्घ्यपात्रजलंवक्ष्यमाणमंत्रैः किंचि त्किंचित्संयोजयेत् । मिताक्षरायांस्मृत्यर्थसारेच । प्रेतार्घ्यजलमादौपितृपात्रेकिंचित्किंचित्संयोज्यावशिष्टेनपश्चात्प्रेतायार्घ्यं दद्यादित्युक्तं । मंत्रास्तु । येसमानाःसमनसःपितरोयमराज्ये । तेषांलोकःस्वधानमोयज्ञोदेवेषुकल्पतां ॥ येसजाताःसमनसो जीवाजीवेषुमामकाः । तेषांश्रीर्मयिकल्पतामस्मिंल्लोकेशतंसमाः ॥ संगच्छध्वंसंवदध्वंसंवोमनांसिजानतां । देवाभागंयथापूर्वेसं जानानाउपासते ॥ समानोमंत्रःसमितिःसमानीसमानंमनःसहचित्तमेषां । समानंमंत्रमभिमंत्रयेवःसमानेनवोहविषाजुहोमि ॥ समानीवआकूतिःसमानाहृदयानिवः । समानमस्तुवोमनोयथावःसुसहासति ॥ मधुवाताइतितृचमपिपठेदितिकेचित् । अमुक गोत्रामुकशर्मन्प्रेतामुकगोत्रैरमुकशर्मभिःपितृपितामहप्रपितामहैःसहसायुज्यंगच्छेत्युक्त्वानंतरंपित्रादिपात्रोदकेनपार्वणवत्तेभ्यो प्यर्घ्यंदत्त्वागंधाच्छादनानियथाक्रमंसर्वेभ्योदद्यात् । प्रेतस्थानेविशेषेण । ततःअग्नौकरणद्वयंकार्यं । भोजनार्थादन्नात्किंचिदन्नंस घृतंगृहीत्वामुकगोत्रायामुकप्रेतायस्वाहेत्येकामाहुतिंप्रेतब्राह्मणकरेहुत्वापात्रांतरेसघृतमन्नमादायपार्वणवत्पित्र्यब्राह्मणहस्तेअग्नौ

१ चतुःकुशंकूर्चंविस्रस्यततएकंकुशमित्यर्थः । २ प्रेतपितृपितामहप्रपितामहानांपात्रत्रये ।

वामीकरणंकृत्वाप्रेतस्थानाहुत्यन्नंवह्नौप्रक्षिपेत् । प्रेतस्थानेनवापाणिहोमः हुतमन्नंपरिविष्टान्नेनसहभुंजीत । अन्नंपाणितलेदत्तं यच्चान्यदुपकल्पितं । एकीभावेनभोक्तव्यंपृथक्भावोनविद्यतइतिवचनात् । ततोऽन्नंपरिविष्यदैवेपृथिवीतेपात्रमित्यादि॰काम कालसंज्ञिकेभ्योविश्वेभ्योदेवेभ्यइदमन्नमित्यादिपार्वणवत् । ततःप्रेतपात्रेपृथिवीतेपात्रमित्यादिअत्रामुकशर्माप्रेतोदेवतेतिवि शेषः । ततोमुकगोत्रायामुकशर्मणेप्रेतायेदमन्नमुपतिष्ठतामितिप्रेतस्थानेसंकल्पः । पित्रादिस्थानत्रयेपार्वणवत् । भोजनांतेउच्छि ष्टपिंडोदेयः । तदनंतरंपिंडदानं । उच्छिष्टसमीपेप्रोक्ष्योल्लिख्यापहतेत्यभ्युक्ष्यदर्भैरवस्तीर्यामुकगोत्रायामुकप्रेतायायंपिंडउपतिष्ठ तामितिएकंपिंडंप्रेतोद्देशेनदत्त्वा । तद्दक्षिणतःपंक्तिरूपेणपार्वणवत्पित्रादिभ्यःपिंडत्रयंदद्यात् । यद्वापूर्वतःप्रेताय । तत्पश्चि मेत्रीन्पिंडान्पित्रादिभ्यइति । ततःप्रेतस्थानेतूष्णींजलंदत्त्वाअमुकप्रेतस्ययद्दत्तंश्राद्धंतदक्षय्यमुपतिष्ठतामित्युक्त्वाविशिष्टदक्षि णांदत्त्वाभिरम्यतामितिविसर्जयेत् । सहैववादक्षिणाविसर्जनेभवतोंते । ततःअमुकगोत्रस्यामुकप्रेतस्यपिंडंपित्रादिपिंडैःसहसं योजयिष्यइतिपृष्ट्वासंयोजयेतिद्विजैःप्रत्युक्ते । मधुवाताइतितृचेनकुशेनप्रेतपिंडंत्रेधाविभज्यअवयवत्रयंत्रिषुपिंडेषुयोजयेदभि मंत्रैःपूर्वोक्तैः । येसमानाः॰ । येसजाताः॰ । संगच्छध्वं॰ । समानोमंत्रः॰ । समानीवः॰ । ततोऽमुकगोत्रामुकप्रेतामुकगोत्रे णामुकशर्मणास्वपित्रासंसृज्यस्वेतिवदन्प्रेतपिंडप्रथमभागंतत्पितृपिंडेसंयोज्यदधिमधुभ्यांमिश्रीकुर्यात् । एवंमधुवाताइतितृच मुक्त्वामुकगोत्रामुकशर्मन्प्रेतामुकगोत्रेणामुकशर्मणास्वपितामहेनसंसृज्यस्वेतिवदन्प्रेतपिंडद्वितीयभागंप्रेतपितामहपिंडेसंयोज्य दधिमधुभ्यांमिश्रीकुर्यात् । एवमेववदन्प्रेतपिंडतृतीयभागंप्रेतप्रपितामहपिंडेसंयोज्यदधिमधुभ्यांमिश्रीकुर्यात् । एवं मात्रादि

शुचिर्भूत्वामंगलसंभारंसंभृत्य स्वलंकृतेगृहेगोमयोपलिप्तभूमौसोत्तरच्छदे भद्रासनउदङ्मुखउपविश्यस्वदक्षिणपार्श्वेसंस्कार्यमुदङ्मु राभुपवेश्य रंगवल्लिकायुक्तेभूतलेप्रस्थपरिमितस्याशक्त्यान्यूनस्यवाधान्यस्योपरिदक्षिणोत्तरयोःसुवर्णरजतताम्रमृन्मयान्यतमक लशद्वयमव्रणंमनोहरमलंकृतंशुद्धपुण्यजलपूरितंसपल्लवंसफलंनिधाय सूत्रवेष्टितोत्तरकलशेपंचरत्नानिनिक्षिप्य तदुपरिसिततंडुल पूरितंसफलंपात्रंनिधाय तत्पश्चिमदेशेप्रशस्तान्प्रतिवचनसमर्थांस्तद्दिवसेश्राद्धादिष्वभुक्तवतोनिषिद्धप्रतिग्रहनिवृत्तान्शुचीन्सोत्त रीयान्दर्भपवित्रपाणीन्युग्मान्ब्राह्मणान्प्राङ्मुखानासनउपवेश्यगंधपुष्पादिभिरभ्यर्च्ययथाचारं सुमुखश्चेत्यादिभिर्गणपतिंस्मृत्वा षोडशोपचारैरभ्यर्च्य उत्तरकलशेदेवताआवाहयेत् । तद्यथा । कलशस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः । मूलेतत्रस्थितो ब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसर्वेसप्तद्वीपावसुंधरा । ऋग्वेदोऽथयजुर्वेदःसामवेदोह्यथर्वणः । अंगैश्चसहिताः सर्वेकलशांबुसमाश्रिताः ॥ पुष्टिःशांतिश्चगायत्रीसावित्रीचसरस्वती । आयांतुयजमानस्यदुरितक्षयकारिकाः ॥ सर्वेसमुद्राः सरितस्तीर्थानिजलदानदाः । आयांतुममशांत्यर्थंदुरितक्षयकारकाः ॥ एवमेताःसमावाह्यकलशेदेवतास्ततः । एतान्मंत्र स्थितान्देवान्संपूज्यप्रार्थयेत्क्रमात् ॥ ततः । सर्वेषुकालेषुसमस्तदेशेष्वशेषकार्येषुतथेश्वरेश्वरः । सर्वैःस्वरूपैःस्तुतिमाननादिर्भमास्तु

१ भद्रासनलक्षणम्—श्रीपर्णीकाष्ठसंभूतमौदुंबरमथापिवा । त्रिंशदंगुलविस्तारमष्टांगुलसमुच्छ्रयम् । द्वात्रिंशदंगुलैर्वापिद्वाविंशत्यंगुलैस्तुवा । एवंविधंप्रकर्तव्यंभद्रासनमुदाहृतं । धर्मप्रवृत्तौतु—अष्टात्रिंशांगुलंपीठमुन्नतंस्यात्षडंगुलं । तदष्टांगुलविस्तारंकुर्यादौदुंबरादिकमिति । स्नात्वा चैवशुचौदेशेपीठेयद्वियदाऽजे । पीठेनवममाच्छन्ने उपविश्यैंद्रदिङ्मुखः । इत्यनेनमांगलिकेपीठंवस्त्राच्छन्नंकार्यमितिप्रतीयते ।

पिंडंपितामह्यादिपिंडत्रयेसंयोजयेत् । प्रतिपिंडसंयोजनेयेसमानाइत्यादीनांसर्वमंत्राणामावृत्तिः । ततः अत्रपितरोमादयध्वमित्यादिसर्वंपार्वणवत् । केचित्तुप्रेतपिंडावयवत्रयेणसंयोजितांस्त्रीन्पिंडानिदानींमृतमारभ्यपुरुषत्रयायपार्वणवत्पुनरपिनामगोत्राद्युच्चार्यदद्यादित्याहुः । द्वादशाहांतंधारितमुत्तरीयवस्त्रंपिंडोपरिदद्यात् । तच्चाचार्योगृह्णीयात् । अवयवापिंडान्नपाकस्थालीआचार्यायदेया । ततः एषवोनुगतःप्रेतःपितृभागमवाप्तवान् । शुभंभवतुशेषाणांजायंतांचिरजीविनः ॥ इतिमंत्रंपठेत् । ततोविकिरद्वयंदद्यात् । शिवाआपःसंत्वित्यादिपार्वणवत् । प्रेतस्थानीयविप्रायइतरेभ्योद्विगुणांदक्षिणांदत्त्वा । वाजेवाजइत्यादिअभिरम्यतामितिचविसर्जयेत् । ॐ स्वस्तीतिवाविसर्जनं । आसीमांतमनुव्रज्यपिंडान्गंगादौप्रक्षिप्यस्नात्वागृहमागत्यवैश्वदेवादिकंकृत्वासपिंडीकरणश्राद्धशेषान्नमन्यद्वायथाचारमिष्टैःसहभुंजीत । श्राद्धभोजिनोपिसचैलंस्नानंकुर्युः । अत्रश्राद्धभोक्तृणांमिथःस्पृष्टौतदन्नमत्यजन्भुक्त्वागायत्र्यष्टशतंजपेत् । उच्छिष्टेसिक्तेतत्प्रक्षाल्यभुक्त्वास्नात्वाद्विशतंजपेत् । उच्छिष्टभोजनेसहस्रंजपेत् ॥ इदंमातुःसपिंडीकरणंसहगमनेभर्त्रैकेनयोजयेत् । तदादिभिस्त्रिभिर्वा । उभयथाब्राह्मणाःसप्त । तदभावेपितामह्यादिभिःसह । पत्न्यामृतमातृकेणमात्रादिभिःसह अमृतमातृकेणतुपितामह्यादिभिरित्यादिसर्वंनिर्णयावसरेवक्ष्यामः । ( अंतरितसपिंडीकालः । चतुर्विंशतिमते । सपिंडीकरणेचाऽब्देसंपूर्णेऽभ्युदयेपिवा । द्वादशाहेचकेषांचिन्मतंचैकादशेतथा । अत्रैकादशाहद्वादशाहशब्दावाद्यौचांत्यदिनोत्तरदिनतदुत्तरदिनोपलक्षकौ । इतिकालतत्त्वविवेचनेवचनसद्भावात् ) ॥ ॥

१ मधुवाताऋतायतइतितृचस्याप्यावृत्तिः ।

इतिश्रीभट्टरामेश्वरसूरिसूनुनारायणभट्टकृतेप्रयोगरत्नेऔर्ध्वदेहिकपद्धतौसपिंडीकरणप्रयोगः ॥ अथपाथेयश्राद्धं ॥ द्वादशेत्रयोदशेवाह्निप्रातःस्नात्वाप्राणानायम्यतिथ्यादिसंकीर्त्यामुकगोत्रस्यामुकशर्मणःप्रेतलोकात्पितृलोकगमनेसुखसिद्ध्यर्थंअमुकगोत्राणाममुकशर्मणामस्मत्पितृपितामहप्रपितामहानांवसुरुद्रादित्यस्वरूपाणांपाथेयश्राद्धंसदैवंसपिंडकंकरिष्यइतिसंकल्प्यपाद्यादिसर्वंश्राद्धंपार्वणवत्पक्वान्नेनामान्नेनवाकुर्यात् ॥ ततःकर्ताभ्यंगस्नानंकुर्यात् । देशकालौस्मृत्वाममसपरिवारस्यसकलारिष्टोपशांतयेक्षेमायुःसिद्ध्यर्थंचगणेशपूजनपूर्वकंस्वस्तिवाचनंकरिष्यइतिसंकल्प्ययथाशाखंस्वस्तिवाचनंवाचयित्वाशिषोगृहीत्वाबंधुभिःसहभुंजीत । इतऊर्ध्वंश्रीखंडधारणतांबूलभक्षणादिकुर्यात् ॥ ॥ अथोदकुंभश्राद्धं ॥ ॥ तत्रयाज्ञवल्क्यः । अर्वाक्सपिंडीकरणंयस्यसंवत्सराद्भवेत् । तस्याप्यन्नंसोदकुंभंदद्यात्संवत्सरंद्विजे ॥ गौतमः । अदैवंपार्वणश्राद्धंसोदकुंभमधर्मकं । कुर्यात्प्रत्याब्दिकाच्छ्राद्धात्संकल्पविधिनान्वहं ॥ अधर्मकंपुनर्भोजनादिनियमरहितं । तथाचेदंकृतेअकृतेवासपिंडनेत्रयोदशदिनादारभ्ययावद्वर्षंप्रतिदिनंकार्यं । अशक्तौप्रतिमासंकार्यं । तच्चाकृतेसपिंडनेएकोद्दिष्टं । कृतेतुतस्मिन्योयथापार्वणमेकोद्दिष्टंवामृताहश्राद्धंकुर्यात्तथैवसकुर्यादिति । ततोवर्षांत्यदिनेसंवत्सरविमोक्षश्राद्धंपार्वणविधिनाशक्त्याभूरिब्राह्मणभोजनंचकार्यं ॥ ॥ इत्युदकुंभश्राद्धांतंकृत्यं ॥ ॥ अथमातापित्रोर्मरणेप्रथमाब्देविहितनिषिद्धानि ॥ ॥ तत्रधवलनिबंधेदेवलः । प्रमीतौपितरौयस्यदेहस्तस्याशुचिर्भवेत् । नदैवंनापिवापित्र्यंयावत्पूर्णोनवत्सरः ॥ तथा । महागुरुनिपातेतुप्रेतकार्यंयथाविधि । कुर्यात्संवत्सरादर्वाग्

१ स्वस्तिवाचनानंतरं कलशेप्रतिमायांरुद्रमावाह्यसंपूज्यब्राह्मणैःशांतिसूक्तानिईळेद्यावेतिसूक्तंनिवर्तध्वमितिसूक्तंसौरसूक्तानिचपाठयंति ।

